साहू ॥ साहुं । साहुणो,साहू ॥ साहुणा । साहूहिं, साहूहि ॥ साहुणो,साहुस्स ॥ साहूओ,साहुणो । साहूहिंतो ॥ साहुणो, साहुस्स । साहूणं ॥ साहुंसि, साहुंमि, साहू । साहूसु ॥ भो साहू ! साहवो! साहुणो! साहू! ॥ एवं सव्वन्नु-भाणु-प्रभृतयः ॥

बहोरवेरतः ॥२।१।३०॥

बहुशब्दस्यावन्तादेशः प्रथमाबहुवचनस्यैकारादेशश्च । बहू। बहवे ॥

पितुप्रभृतीनामोरुत्यात् ॥१।२।१५॥

पितुप्रभृतिशब्दसम्बन्धिन उकारादुप्रत्यये पूर्वपरयोराकार एकादेशः स्यात् । पिता, पिया ॥

अरयरोः ॥१।२।१६॥

उक्तोकारादप्रत्यये परे पूर्वपरयोररो इत्यादेशः स्यात् । पितरो, पियरो ॥

अरोऽमि ॥१।२।१७॥

उक्तोकारस्यार इत्यादेशः स्यान्मप्रत्यये । पितरं, पियरं ।

स्सस्य वा ॥१।२।१९॥

उक्तोकारात्परस्य स्सप्रत्ययस्यैस्सादेशो वा स्यात् । पिउए, पिउस्स, पिउणो । शेषं साहुवत् ॥ एवं भातु-नत्तु-जामा-त्वादयः ॥

उतः पितुप्रभृतिभ्यो डडरमावामन्त्रणे ॥१।२।३१।

पितुप्रभृतिशब्दात्परस्यामन्त्रणोतो ड डरम् इत्येतावादेशौ पर्यायेण स्तः। हे पिय ! हे पियरम् ! ॥

डावोरतः ॥२।१।६४॥

गोशब्दात्परस्य प्रथमाबहुवचनस्य डावो इत्यादेशः स्यात्। वा० (डावोर्वस्य लोपो वा वक्तव्यः) गाओ, गावो। गोहिं ॥

गोर्डवम् ॥२।१।६३॥

गोशब्दात्परस्याणंप्रत्ययस्य डवमित्यादेशः स्यात्। गवं ॥

सव्वादयः सव्वणामाः ॥२।१।३७॥

सव्वादयः शब्दाः सव्वणामसंज्ञाः स्युः। सव्व + उ = सव्वे, सव्वो ॥

सव्वणामादत्ये: ॥२।१।३८॥

अकारान्तसव्वणामशब्दात्प्रथमाबहुवचनेऽति प्रत्यये परे पूर्वपरयोरेकार एकादेशः स्यात्। सव्व + अ = सव्वे ॥ सव्वं। सव्वे ॥ सव्वेणं, सव्वेण, सव्वेहिं, सव्वेहि ॥ सव्वाए ॥ सव्वाओ, सव्वा। सव्वेहिंतो ॥ सव्वस्स।

इसिमणमः ॥२।१।४०॥

अकारान्तसव्वणामशब्दात्परस्याणंप्रत्ययस्येसिमित्यादेशः स्यात्। सव्व + अणम् = सव्वेसिं ॥ सव्वंसि, सव्वंमि, सव्वे। सव्वेसु ॥

## कजतेभ्योऽतोतो म्हा ॥२।१।४१॥

एभ्यः परस्य पञ्चम्येकवचनस्यातोत्तो म्हादेशो वा स्यात्। जम्हा। शेषं सव्वशब्दवत्॥

## उरयेततयोरक्लीबे सः ॥२।१।४२॥

एततशब्दयोरुपधायाः प्रथमैकवचने परे स इत्यादेशः स्यादक्लीबे॥

## तस्य लोपो वा ॥२।१।४३॥

एततशब्दसम्बन्धिनः प्रथमैकवचनस्य लोपो वा स्यात्। से, सो, स। ते॥ तम्हा॥

## तस्य सस्सस्य सेर्वा ॥२।१।४४॥

तशब्दस्य स्सम्बन्धितस्य से इत्यादेशो वा स्यात्। से तस्येत्यर्थः॥ के, को। के॥ कं। के॥ केणं, केण। केहिं, केहि॥ काए॥ कम्हा, काओ।

## कादिहिंतो रितो डओः ॥२।१।४५॥

कशब्दात्परस्येहिंतोप्रत्ययस्यादेरिकारस्य डओ इत्यादेशः स्यात्। कओहिंतो॥ कस्स। केसिं॥

## इमकाभ्यां सेः स्सिं वा ॥२।१।४६॥

आभ्यां परस्य सप्तम्येकवचनस्य सेः स्सिं इत्यादेशो वा स्यात्। कस्सिं, कम्मि, कंमि, के। केसु॥

## इमस्स सोतोऽयम् ॥२।१।४७॥

इमशब्दस्योप्रत्ययसहितस्यायमित्यादेशो वा स्यात्। इम + उ = अयं, इमे,

## मोर्णड् वा ॥२।१।५१॥

इमसम्बन्धिनो मो इत्यस्य णडागमो वा स्यात्। इणमो, इमो। "जंबू[1] इणमो अण्हयसंवरविणिच्छयं पवयणस्स निस्संदं" इमे ॥

## मस्य णोऽमि ॥२।१।५२॥

इमसम्बन्धिनो मकारस्य णकारादेशो वा स्यात्। इणं, इमं। "इणमक्खेवं[2] पुच्छे" ॥ इमे ॥

## इणेऽणः ॥२।१।५३॥

इमशब्दस्याण इत्यादेशो वा स्यात् इणप्रत्यये। अणेण, इमेणं, इमेण। इमेहिं, इमेहि ॥ इमाए ॥ इमाओ, इमा। इमेहिंतो ॥

## स्सिंस्सयो रो वा ॥२।१।५४॥

इमशब्दस्याकारादेशो वा स्यात् स्सिंस्सयोः परयोः। अस्स, इमस्स। इमेसिं ॥ अस्सिं, इमंसि, इमंमि। इमेसु ॥ एसो, एसे, एस। एए ॥ एयं। एए ॥ एएणं, एएणा। एएहिं, एएहि ॥ एयाए ॥ एयाओ, एया, एएहिंतो ॥ एएसिं। एएसु ॥

## अनुस्वारस्येसिमः ॥२।१।३६॥

सव्वणामशब्दात्परस्येसिंप्रत्ययस्यानुस्वारस्य लोपो वा स्यात्। एएसि। जेसि। तेसि। एवमन्नकयरेयरादयः ॥

---

१ जम्बू! इदमास्त्रव (श्रव) संवरविनिश्चयं प्रवचनस्य निस्स्यन्दम्। पण्ह० १-१। २ इममाक्षेपं पृष्टवान्। भग० २-१।

## अम्हस्य हमहमौ सोतः ॥२।१।७५॥

उत्प्रत्ययसहितस्याम्हशब्दस्य हं अहमिति च पर्यायेण निपात्येते । हं, अहं ।

## सातो वयम् ॥२।१।७६॥

अप्रत्ययसहितस्याम्हशब्दस्य वयमित्यादेशो वा स्यात् । अम्हे, वयं ।

## समो मेमंममममः ॥२।१।७७॥

मप्रत्ययसहितस्याम्हशब्दस्य मे, मं, मम, ममं, इति च पर्यायेण निपात्यन्ते । मे, मं, मम, ममं ।

## सेतो णोः ॥२।१।७८॥

अम्हशब्दस्य द्वितीयाबहुवचनान्तस्य णो इत्यादेशो वा स्यात् । णो, अम्हे ॥

## सेणस्य मएमयौ ॥२।१।७९॥

इणप्रत्ययसहितस्याम्हशब्दस्य मए मया इति च पर्यायेण निपात्येते । मया, मए । अम्हेहिं ॥

## सातोतो ममाओममाहिंतावौ ॥२।१।८०॥

पञ्चम्येकवचनसहितस्याम्हशब्दस्य ममाओ ममाहिंतो इति च निपात्येते । ममाओ, ममाहिंतो । अम्हेहिंतो ॥

## सस्सस्य ममममज्झंमज्झाश्च ॥२।१।८१॥

स्मप्रत्ययसहितस्याम्हशब्दस्य मम मज्झं मज्झाश्च-कारान्मे ममं इति पर्यादेशा निपात्यन्ते । मम, ममं, मज्झ, मज्झं, मह्नं, मे ।

## मौ ममं ॥२।१।८२॥

मिप्रत्यये परे अम्हशब्दस्य ममंमित्यादेशः स्यात् । ममंसि ।

## अणमोऽणो लोपः ॥२।१।८३॥

अम्हशब्दात्परस्याणंप्रत्ययस्याणो लोपो वा स्यात् । अम्हं,

## साणमोणेऽस्साकमौ ॥२।१।८४॥

षष्ठीबहुवचनसहितस्याम्हशब्दस्य णे अस्साकमिति च वा निपात्येते । णे, अस्साकं, अम्हाणं ॥ "एयं णे पेच्चभवे"

## मम्हिं वा ससेः ॥२।१।८५॥

सिप्रत्ययसहितस्याम्हशब्दस्य मम्हिं इति वा निपात्यते । मम्हिं, अम्हेसु ॥

१ एतदस्माकं प्रत्यभवे ॥ आव० २७ ॥ २ "तं भद्दं णं भवतु देवाणुप्पियाणं मम्हिं जस्स अणुप्पभावेणं अकिलट्ठे जाव विहरामि" भग० ॥३-१॥

(तद्भद्रं भवतु देवानुप्रियाणां मयि यस्यानुप्रभावेणाक्लिष्टो यावद्विहरामि)

# तुम्हशब्दः ॥

## सोतस्तुम्हस्य तंतुमेतुममः ॥२।१।८६॥

उप्रत्ययसहितस्य तुम्हशब्दस्य तं तुमे तुममिति च पर्यायेण निपात्यन्ते । तं, तुमं, तुमे ॥

## बहुवचनेषु तुब्भतुज्झौ ॥२।१।८७॥

तुम्हशब्दस्य बहुवचनेषु परेषु तुब्भ तुज्झ इत्येतावादेशौ पर्यायेण वा स्तः । तुब्भे, तुज्झे, तुम्हे ॥

## मिमौ च हो लोपः ॥२।१।८८॥

मिप्रत्यये मप्रत्यये च परे तुम्हशब्दस्य हकारस्य लोपः स्यात् । तुमं, तुब्भे ॥

## सेणस्य तुमे ॥२।१।८९॥

इणप्रत्ययसहितस्य तुम्हशब्दस्य तुमे इति निपात्यते । तुमे । तुब्भेहिं, तुज्झेहिं, तुम्हेहिं ॥

## सातोतस्तुमाहिंतो ॥२।१।९०॥

अतोत्प्रत्ययसहितस्य तुम्हशब्दस्य तुमाहिंतो इति निपात्यते । तुमाहिंतो । तुब्भेहिंतो ॥

## सस्ससस्य तेतवतुज्झंतुमंतुहंतुज्झाः ॥२।१।९१॥

स्सप्रत्ययसहितस्य तुम्हशब्दस्यैते पर्यायेण निपात्यन्ते । ते, तव, तुज्झं, तुमं, तुहं, तुज्झ ॥

अणमोऽमः ॥२।१।१२॥

तुम्हशब्दसम्बन्धिनो मकाररहितस्याणंप्रत्ययस्य लोपो वा स्यात् । तुब्भं, तुम्हं, तुम्हाणं ॥ तुमंसि । तुब्भेसु, तुम्हेसु ॥

॥ इति स्वरान्ताः पुल्लिङ्गाः ॥

## अथ स्वरान्ताः स्त्रीलिङ्गाः ॥

तत्राकारान्तः स्त्रीलिङ्गो मालाशब्दः ॥ माला+उ=माला

आतश्चादितोरोक् ॥२।१।३२॥

आदिदुद्भ्यः परयोः प्रथमाद्वितीयाबहुवचनयोरोगागमो वा स्यात् स्त्रियाम् । मालाओ, माला ॥

आदीदूतां ह्रस्वो मि ॥२।१।३३॥

मि परे आकारेकारोकाराणां ह्रस्वः स्यात् ।[1] माला+म्=मालं । मालाओ, माला ॥

णस्य स्त्रियामेः ॥२।१।३१॥

इणप्रत्ययसम्बन्धिनो णकारस्य स्त्रियामेकारादेशः स्यात् । मालाए । मालाहिं ॥ मालाए ॥ मालाओ । मालाहिन्तो ॥

---

१ "आदिदुद्भ्यः" इत्यादिना पूर्वपरयोः पूर्वसवर्णदीर्घैकादेशः ।

स्सस्याए: ॥२।१।३४॥

स्सप्रत्ययस्य स्त्रियामए इत्यादेशः स्यात् । मालाए । मालाणं ॥

मेरादीदूभ्यः ॥२।१।३५॥

आकारादीकारादूकाराच्च परस्य सप्तम्या एकवचनस्याप्यए इत्यादेशः स्यात् । मालाए । मालासु ॥

आतो डे रीदूद्भ्यां ङिङ्ग वाऽऽमन्त्रणे ॥२।१।३६॥

आमन्त्रणैकवचनस्याकारात्परस्य डे ईकारादूकाराच्च परस्य क्रमेण ङि ङु इत्येतावादेशौ वा स्तः । भो माले! माला! भो नइ! भो वहु! ॥

## इकारान्तः स्त्रीलिङ्गो दिट्ठिशब्दः ॥

दिट्ठी । दिट्ठीओ, दिट्ठी ॥ दिट्ठिं । दिट्ठीओ, दिट्ठी ॥ दिट्ठीए । दिट्ठीहिं ॥ दिट्ठीए ॥ दिट्ठीओ । दिट्ठीहिन्तो ॥ दिट्ठीए । दिट्ठीणं ॥ दिट्ठिंसि । दिट्ठीसु ॥ भो दिट्ठी! । दिट्ठीओ! ॥

## ईकारान्तः स्त्रीलिङ्गः समणीशब्दः ॥

समणी । समणीओ, समणी ॥ समणिं । समणीओ, समणी ॥ समणीए । समणीहिं ॥ समणीए ॥ समणीओ । समणीहिंतो ॥ समणीए । समणीणं ॥ समणीए । समणीसु ॥ भो समणि! । समणीओ! ॥

## उकारान्तः स्त्रीलिङ्गो धेणुशब्दः ॥

धेणू । धेणूओ, धेणू ॥ धेणुं । धेणूओ, धेणू ॥ धेणूए ।

धेणूहिं ॥ धेणूए ॥ धेणूओ । धेणूहिन्तो ॥ धेणूए । धेणूणं ।
धेणूए । धेणूसु ॥ भो धेणू! । धेणूओ! ॥

## ऊकारान्तः स्त्रीलिङ्गा वहूशब्दः ॥

वहू । वहूओ, वहू ॥ वहुं । वहूओ, वहू ॥ वहूए ।
वहूहिं ॥ वहूए ॥ वहूओ । वहूहिन्तो ॥ वहूए । वहूणं ॥
वहूए । वहूसु ॥ भो वहु! । वहूओ! ॥

सव्वशब्दस्य स्त्रीत्वे वाच्ये—सव्वा । सव्वाओ, सव्वा ॥
सव्वं । सव्वाओ, सव्वा ॥ सव्वाए । सव्वाहिं ॥ सव्वाए ॥
सव्वाओ । सव्वाहिन्तो ॥ सव्वाए ।

### आतस्सिम् सव्वणामात् ॥२।१।५५॥

आकारान्तात्सव्वणामशब्दात्परस्याणमः स्सिमादेशः
स्यात् । सव्वा+अणम्=सव्वास्सिं॥ सव्वाए । सव्वासु ॥ जा ।
जाओ ॥ जं । जाओ ॥

### जातयोरीर्वेणे ॥२।१।५६॥

अनयोराकारादिणसम्बन्धिनीकारे परे पूर्वपरयोरीकार ए-
कादेशो वा स्यात् । जीए, जाए । जाहिं ॥

### अएस्ससानामिमाकाजाताभ्यो डीसे ॥२।१।५७॥

इमाकाजाताशब्देभ्यः परेषां षष्ठीचतुर्थीसप्तम्येकवचनानां
डीसे इत्यादेशो वा स्यात् ॥ जीसे जाए ॥ जीसे, जाए ।
जास्सिं ॥ जीसे, जाए । जासु ॥ एवं कानाशब्दौ ॥

स्त्रियामियम् २।१।४८॥

इमशब्दस्योत्प्रत्ययसहितस्य स्त्रियामियमिति वा निपात्यते। इयं, इमा॥

ङेश्चेमादादितोः ॥२।१।५८॥

स्त्रियामिमशब्दात्परयोरदितोर्ङे आदेशः स्याचकारादोगागमो वा स्यात्। इमे, इमाओ, इमा॥

स्सस्य डीए ॥२।१।५६॥

स्त्रियामिमशब्दात्परस्य स्सप्रत्ययस्य डीए इत्यादेशो वा स्यात्। इमीसे, इमीए, इमाए। इमासिं॥ वा० (इमात्सेर्डीसाए: कश्चिद्वक्तव्यः), इमीसाए। शेषं जाशब्दवत्॥ एताशब्दस्योपधायाः सकारादेशो, एसा, एआओ, एआ॥ शेषं सव्वावत्॥

॥ इति स्वरान्ताः स्त्रीलिङ्गाः॥

# अथ स्वरान्ता नपुंसकलिङ्गाः॥

उतः क्लीबान्मः ॥२।१।६०॥

नपुंसकात्परस्य प्रथमाया एकवचनस्य मादेशः स्यात्। वण+उ=वणं॥ दहि+उ=दहिं॥ महु+उ=महुं॥

अदितोरेकैकस्य णिती दीर्घश्च प्रकृतेः ॥२।१।६१॥

क्लीबात्परयोः प्रथमाद्वितीयाबहुवचनयोः प्रत्येकं णि तिं इत्येतावादेशौ पर्यायेण स्तः प्रकृतेर्दीर्घान्तादेशश्च॥

## तेरनुस्वारो वा ॥२।१।६२॥

आदेशभूतस्य तेरनुस्वारान्तागमो वा स्यात्। वण+अ =वणाणिं, वणाइं, वणाइ ॥ दहि+अ=दहीणि, दहीइं, दही- इ ॥ महु+अ=महूणि, महूइं, महूइ ॥ द्वितीयायामपि तथा। सम्बोधने हेवण! । हे दहि! । हे महु! । हे वणाणि!। इत्यादि ॥ शेषं पुंवत् ॥ सव्वं । सव्वाणि, सव्वाइं, सव्वाइ ॥ जं । जाणि, जाइं, जाइ ॥ तं । ताणि, ताइं, ताइ ॥ कं । काणि, काइं, काइ ॥ इमं । इमाणि, इमाइं, इमाइ ॥ एयं । एयाणि, एयाइं, एयाइ ॥ शेषं पुंवत् ॥

॥ इति स्वरान्ता नपुंसकलिङ्गाः ॥

# अथ संख्यावाचकास्त्रिलिङ्गाः ॥

## दोरदितोर्दोः ॥२।१।६३॥

दुशब्दात्परयोरदित्प्रत्यययोर्दो इत्यादेशः स्यात्। दु+अ =दो। दु+इ=दो ॥

## दुवे दोण्णी क्वचित् ॥२।१।६४॥

दुशब्दात्परयोरदितोः क्वचित् प्रत्येकं दुवे दोण्णि इत्ये- तावादेशौ स्तः। दुवे। दोण्णि

## ड्डास्वहीहिंतवा दुप्रभृतिभ्यः ॥१।३।१८॥

दुप्रभृतिभ्यः संख्यावाचकेभ्यः परेषामेषामादिस्वरस्य लोपः स्यात्।

इहीहिंतोऽणामिसुष्वोत् ॥२।१।६५॥

दुशब्दस्यौकारादेशः स्यादिहि-इहिंतो-असाम्-इसु-प्रत्ययेषु । दोहिं । दोहिंतो ॥

संख्यावाचकादणमो ण्हम् ॥२।१।७२॥

संख्यार्थकशब्दात्परस्यामाम्प्रत्ययस्य ण्हमित्यादेशः स्यात् । दोण्हं । दोसु ॥

तेईओः ॥२।१।६६॥

तिशब्दात्परयोरदितोईओ इत्यादेशः स्यात् । ति+अ=तओ । ति+इ=तओ ॥

ण्णिश्च ॥२।१।६७॥

तिशब्दात्परयोरदितोर्ण्णि इत्यादेशः स्यात् क्वचित् । तिण्णि । तिहिं । तिहिंतो । तिण्हं । तिसु ॥

सादितश्चत्तारि चतुरः ॥२।१।६८॥

अदित्प्रत्ययसहितस्य चउशब्दस्य चत्तारि इति निपात्यते । चउ+अ=चत्तारि । चउ+इ=चत्तारि । चउहिं । चउहिंतो । चउण्हं । चउसु ॥

रोश्च ओः ॥२।१।६९॥

चतुशब्दात्परयोरदितो रो इत्यादेशः क्वचित् । चउरो ॥

पञ्चादिभ्यो लोपः ॥२।१।७०॥

पञ्चादिसंख्यावाचकेभ्यः परयोरदितोर्लोपः स्यात् । पंच ।

पंचहिं, पंचहिंतो । पंचण्हं । पंचसु ॥ एवं छशब्दादारभ्याट्ठारसपर्यन्तं बोध्यम् ॥

## संख्यायां तेः ॥२।१।७१॥

संख्यार्थकतिप्रत्ययान्तात्परयोरदितोर्लोपः स्यात्। कति। जति। तति। वीसाद्या नउइपर्यन्ताः शब्दाः संख्यासंख्येयोभयवाचकाः, तत्र संख्येयवाचकत्वे नित्यैकवचनान्ताः संख्यावाचकत्वे वचनद्वयान्ताः ॥

## वीसादीनामानउईनां क्लीबत्वं प्रथमाद्वितीययोः ॥२।१।७३॥

नउइशब्दपर्यन्तानां वीसादिशब्दानां प्रथमायां द्वितीयायां च नपुंसकवद्रूपं स्यात् ॥

## नाम्नो नपुंसके ह्रस्वः ॥२।१।७४॥

नाम्नो ह्रस्वान्तादेशः स्यान्नपुंसके। एगूणवीसं। एगूणवीसा। चत्तालीसं। चत्तालीसा। एगूणतीसाइं [illegible]साइं। अडयालीसाए संवच्छरेहिं ॥

॥ इति संख्यावाचकशब्दास्त्रिलिङ्गाः ॥

॥ इति विभक्तिप्रकरणम् ॥

# ॥ अथाऽव्ययप्रकरणम् ॥

## अव्ययम् ॥१।१।१६॥

अधिकारोऽयम् ॥

सदृशं त्रिषु लिङ्गेषु, सर्वासु च विभक्तिषु ।
वचनेषु च सर्वेषु, यन्न व्येति तदव्ययम् ॥ १ ॥

## अहादयः ॥१।१।२०॥

अहादिगणपठिताः शब्दा अव्ययसञ्ज्ञाः स्युः ॥ अ अण निषेधे । अह आनन्तर्यादौ । अइरा तत्काले । अइव अईव अधिके । अंग आमन्त्रणे । अन्तर् अन्तरेण अभाववति । अंते अंतो मध्यदेशे । अकम्हा दैवादित्यर्थे । अचिरं शीघ्रतायाम् । अजस्सं निरन्तरे । अज्ज अस्मिन्नहनि । अज्जयाए अद्यप्रभृत्यर्थे । अज्जसुए अद्यश्व इत्यर्थे । अणिसं सतते । अति अतिशये । अत्थि अस्तीतितिङन्तप्रतिरूपकमव्ययम् । अदु अदुत्तरं आनन्तर्यादौ । अदुवा पक्षान्तरे । अधो नीचैरित्यर्थे । अभि आभिमुख्ये । अभिक्खणं अभिक्खं पौनःपुन्ये । अलं पर्याप्त्यादौ । अलमंथु अलमस्त्वित्यर्थे । अवि समुच्चयादौ । अविअ पक्षान्तरे । अवियाइं सम्भावनायाम् । असइं असतिं पौनःपुन्ये । अहवणं अथवाऽर्थे । अहावरं

अहे ततःपरमित्यर्थे। अहो नीचदेशे। आ मर्यादाभिविध्यादौ। आइं वाक्यालङ्कारे आउ पक्षान्तरे। आरा समीपे। इ प्राकृते। इइ इति इत्ति इय प्रकारे, समाप्तौ च। इव सादृश्ये। ईसं ईसि ईसिं अल्पत्वे। उण उणो पुनरित्यर्थे। उदाहु उदाहु पक्षान्तरे। उपरि उप्पिं उवरि उपर्यर्थे। उस्सण्णं उस्सन्नं प्रायोऽर्थे। उपरि पूर्वप्रकारे। ए सम्बोधने एतत्प्रकारे। एम एमाइ इत्यादौ। एमेव एतत्प्रकारे। एव अवधारणे। एवं पूर्वोक्तरीतौ। एवणहं वाक्यालङ्कारे। किं जिज्ञासायाम्। किंच पक्षान्तरे। किणाइ किञ्चिन्मात्रमित्यर्थे। किण्णं जिज्ञासायाम्। किर किल निश्चये। कीस कस्मादित्यर्थे। कद् कु कुत्सायाम्। खलु निश्चये वाक्यालङ्कारे च। खिप्पं शीघ्रतायाम्। च च्च समुच्चयादौ। चिट्ठं चे भृशमित्यर्थे। जइ जति जदि यद्यर्थे। जाउ कदाचिदित्यर्थे। जाव ताव यावत्तावदित्यर्थे। जुगवं एकस्मिन् काले। झत्ति शीघ्रतायाम्। ण निषेधे। णं वाक्यालङ्कारे। णवरं णवरि कैवल्यार्थे। णहु निषेधे। णाइ निषेधे। णाणा अनेकस्मिन्। णिहो नीचदेशे। णु प्रश्ने। णूणं निश्चये। णो निषेधे। पणं पहं वाक्यालङ्कारे। तं तत्रत्यार्थे। ति त्ति पूर्वोक्तप्रकारे समाप्तौ च। तु समुच्चये। थ वाक्या-

लङ्कारे। दिया दिवसे। दूरा दूरदेशे। धणियं अति-शये। धिद्धि धिर धिसि धिक्कारार्थे। न निषेधे। णणु शङ्कायाम्। नमो नमस्कारे। नवरं नवरि कैव-ल्यार्थे। नहु निषेधे। नाणा अनेकस्मिन्। नूणं निश्च-ये। नो नोणं निषेधे। दुट्ठु दुष्टे। पए पगे प्रभाते। पच्छा उत्तरत्र। पभिइ पभित्ति प्रारभ्येत्यर्थे। परेव्वं परदिने। पसढं प्रसह्येत्यर्थे। पाए प्रायोऽर्थे। पाओ पातो प्रभाते। पायं प्रायोऽर्थे प्रभाते च। पि अप्यर्थे। पिव इवार्थे। पिहं पिहु पिहो पुढो पृथगर्थे। पुण पुणो पुनरित्यर्थे। पुरा पूर्वकाले अग्रे च। पुरत्था पुर-च्छा पुरे अग्रे इत्यर्थे। पुला पूर्वकाले। बहिं बाह्ये। भंते पूज्यसम्बोधने। भिसं अतिशये। भुज्जो भूज्जो बाहुल्ये। भे भो सम्बोधने। मज्झो मध्ये। मणयं मणा अल्पे। माहं निषेधे। मिव इवार्थे। मिहो परस्परस्मिन्। मुसा असत्ये। मुहा निष्प्रयोजने। मुहु पौनःपुन्ये। य चार्थे। युगवं एककाले। रह रहो एकान्ते। राओ रात्रावित्यर्थे। रिते विनाऽर्थे। वि अ-प्यर्थे। विव इवार्थे। विसुं वीसु पृथक्त्वे। व्व इवार्थे। सइं सकृदर्थे सदार्थे च। संपइ संपयं एतत्काले। सं-पाओ प्रभाते। सक्खं प्रत्यक्षज्ञाने। समंतं समंता

सर्वप्रकारेणेत्यर्थे। सणिअं शनैरित्यर्थे। सद्धिं समं सहार्थे। सयं सकृदित्यर्थे स्वयमित्यर्थे वा। सययं सतते। सयराहं सत्वरमित्यर्थे। सायं सूर्यास्तमनसमये। सुइरं दीर्घकाले। सुए अनागतदिने। सुट्ठु सौष्ठवे। सुतरं सहजत इत्यर्थे। सेवं तदेवमित्यर्थे। हंता स्वीकारे। हंद आश्चर्यार्थे। हंदि हंभो आमन्त्रणे, क्रुद्धसंबोधने, विकल्पविषादपश्चात्तापनिश्चयेषु च। हउं हा इत्यर्थे। हणिहणि प्रतिदिनम्। हद्धी खेदे। हव्वं शीघ्रतायाम्। हिज्जो अतीतदिवसे। ही आश्चर्ये। हुरत्था बहिर्देशे। हुलियं शीघ्रतायाम्। हे सम्बोधने। हेट्ठ हेट्ठा हेट्ठिं हेट्ठिल्ला नीचदेशे। हे हो आमन्त्रणे।

अत्यादयश्च ॥१।१।२१॥

अत्यादिगणपठिताः शब्दा अव्ययसंज्ञाः स्युः।

अइ अति अतिशये उत्कर्षे च। अणु अनु पश्चात्सादृश्यलक्षणादिषु। अधि अहि सत्त्वेऽधिकारे च। अभि आभिमुख्यादौ। अव उव ओ निश्चयानादरालम्बनादिषु। आ सीमादौ। आविर् व्यक्ते। उ उद् ऊर्ध्वादौ। उ उप उव ओ ओव समीपादौ। णि नि निषेधादौ। णिर् निर् वियोगे निश्चितादौ च। तु पृथग्भावादौ। दु दुर् पीडादौ।

प प्प प्रकर्षादौ। पडि पति व्याप्तिलक्षणप्रातिकूल्यादौ। परा प्राधान्यादौ। परि पलि सर्वत्रेत्यर्थे। पाउ पाउर् प्राकाश्ये। वि नियोगादौ। सद् श्रद्धायाम्। सम् समुच्चयादौ।

## अमादितद्धितान्ताः ॥१।१।२२॥

अम् आ आवन्ति इइ इण इण्ण इह ई ए क्खुत्तो चगं चि चिय ण्हं ण्हिं ण्हु ता ति तो त्थ त्थं दा दाणिं धा या सि सो स्स स्सिं हं ह हा हिं हियं हुणा इत्येतत्तद्धितप्रत्ययान्ताः शब्दा अव्ययसंज्ञाः स्युः। जं यस्मादित्यर्थः। तं तस्मादित्यर्थः। ता तत इत्यर्थः। सव्वावन्ति सर्वमित्यर्थः। केइ कश्चित् केचिदित्यर्थः। केणइ केनचिदित्यर्थः। कोइ कश्चिदित्यर्थः। जेणं जेण यत्रेत्यर्थः। तेणं तेण तत्रेत्यर्थः। किण्णा कथमित्यर्थः। इह अस्मिन्नित्यर्थः। किह कुत्रेत्यर्थः। कयाइं कयाई कदाचिदित्यर्थः। कस्सइ कस्यचिदित्यर्थः। जाए यत इत्यर्थः। ताए तत इत्यर्थः। पगामाए प्रकामत इत्यर्थः। दुक्खुत्तो द्विःकृत्व इत्यर्थः। तिक्खुत्तो त्रिःकृत्व इत्यर्थः। इमंचणं इमंचनेत्यर्थः। एकंचणं एकंचनेत्यर्थः। जावंचणं जावचणं यावच्चनेत्यर्थः। तावंचणं तावच्चनेत्यर्थः। कहिंचि कुत्रचिदित्यर्थः। कुहिंचिय कुत्रचिदित्यर्थः। जण्हं यस्मादित्यर्थः। इण्हिं इयण्हिं

इदानीमित्यर्थः। कण्हु कुत्रेत्यर्थः। कता कदेत्यर्थः। सता सर्वदेत्यर्थः। जओ जतो यत इत्यर्थः। एत्थ इत्थं अत्रेत्यर्थः। कत्थ कुत्थ कुत्रेत्यर्थः। जत्थ यत्रेत्यर्थः। तत्थ तत्रेत्यर्थः। इत्थं अमुना प्रकारेणेत्यर्थः। तदा तदेत्यर्थः। सदा सर्वदेत्यर्थः। इदाणिं इयाणिं इदानीमित्यर्थः। तथा तथेत्यर्थः। सया सव्वया सर्वदेत्यर्थः। एकसि एकश इत्यर्थः। कमसो क्रमश इत्यर्थः। पायसो प्रायश इत्यर्थः। बहुसो बहुश इत्यर्थः। दवदवस्स द्रुतंद्रुतमित्यर्थः। एकसिंस एकदेत्यर्थः। इह इहं अस्मिन्नित्यर्थः। तहा तथेत्यर्थः। कहिं कुहिं कुत्रेत्यर्थः। जहिं यत्रेत्यर्थः। तहिं तत्रेत्यर्थः। कहियं कुत्रेत्यर्थः। जहियं यत्रेत्यर्थः। तहियं तत्रेत्यर्थः। अहुणा अधुनेत्यर्थः।

हेतुसम्बन्धकृदन्ताश्च ॥१।१।२३॥

हेत्वर्थकत्तएप्रभृतिसम्बन्धार्थकत्तादिप्रत्ययान्ताश्चाव्ययसंज्ञाः स्युः। गच्छित्तए। गच्छित्ता। अभिगन्तुं। गणिउं। वेत्तुं। गहिउं। पग्गहित्तु। नेऊणं। भंजिऊणं। गमेऊणं। पडिविसज्जिय। उस्सक्किया। किच्च। किच्चा। कट्टु। उवागच्छ। पकत्थ॥

समासेऽमन्ताः ॥१।१।२४॥

समासेऽम्प्रत्ययान्ता अव्ययसंज्ञाः स्युः। अहोनिसं॥

### इकारान्ता दिस्यादयः ॥१।१।२५॥

इकारान्ता दिस्यादिशब्दाश्च समासेऽव्ययसंज्ञाः स्युः । अहो-निसि । दिसोदिसिं । गुम्मागुम्मि ॥

### अव्ययाच्च ॥८।४।६६॥

अव्ययात्परस्य बहुलं सुपो लोपः स्यात् ।

॥ इत्यव्ययप्रकरणम् ॥

## ॥ अथ स्त्रीप्रत्ययप्रकरणम् ॥

### अतः स्त्रियां डाः ॥२।२।१॥

अकारान्तान्नाम्नः स्त्रीत्वे द्योत्ये डाप्रत्ययः स्यात् । अम्मा । अबिला । अब्भोगडा ॥

### अधिगरणादिभ्यो डीः[1] ॥२।२।२॥

अधिगरणादिगणपठितेभ्योऽकारान्तेभ्योऽपि स्त्रियां डी-प्रत्ययः स्यात । अधिगरणी । अभियोगी । अवचुल्ली ॥ वा० ( गोर्गावो डीति वक्तव्यः ) गावी ॥

[1] अहिगरण, अभियोग, अवचुल्ल, आराहण, कप्पण, कमढ, कण्ह, काग, गाहावइ, गुरु, गो, चउद्दस, नत्तु, न्तमन्तप्रत्ययान्ता जातिपन्तवर्ज्जाः , पन्नरस, मउ,मह, मासवाचकाः , वातोल, वीअण, वेताल, वेरुभ, सं[illegible] [illegible]ंगण, साहु, सिरस, सीस, एतेऽहिगरणादयः ।

### के पूर्वस्य ह्रस्वोऽत इर्वा ॥२।२।१॥

स्वार्थविहितकप्रत्यये परे पूर्वस्य ह्रस्वः स्यादकारश्चेत्पूर्वस्मिन्-स्येकारो वा स्यात् । मामिया । महल्लिया । महालिया । महा-लया । अम्मया ॥

### अणश्च ॥२।२।३॥

अणप्रत्ययान्ताङ्डीप्रत्ययः स्यात् । आरवी ॥

### इतोऽभावे णीः ॥२।२।४॥

भावभिन्नार्थकप्रत्ययान्ताण्णीप्रत्ययः स्यात् । आसाविणी ॥

### इन्द्राद्राणीः पुंयोगे ॥२।२।६॥

इन्द्रशब्दात्पुंयोगे स्त्रियामाणीप्रत्ययः स्यात् । इन्द्राणी ॥

### दिसाङिश्च ॥२।२।७॥

दिश्शब्दाङिप्रत्ययश्चकाराट्टाप्प्रत्ययः पर्यायेण स्तः स्त्रि-याम् । दिसा । दिसि ॥

### उतो ङीति प्रकृत्या ॥२।२।११॥

उकारान्ताः शब्दा ङीप्रत्यये परे प्रकृत्या स्युः । नत्तुई । नउई ॥

### महत्तीः ॥२।२।८॥

महच्छब्दात् स्त्रियां तीप्रत्ययः स्यात् । महती ॥

भिक्खुप्रभृतिभ्यश्च ॥२।२।५॥

एभ्यः स्त्रियां णीप्रत्ययः स्यात्। भिक्खुणी। साहुणी। गाहावइणी, गाहावतिणी। गहवइणी॥

सिस्समासयोर्णीति सलोपे ॥२।२।१०॥

अनयोरकारस्येकारः स्याणिप्रत्यये सलोपे सति। सीसिणी। पुराणमासिणी। सलोपे किम्। सिस्सणी॥

इति स्त्रीप्रत्ययप्रकरणम्॥



# अथ कारकप्रकरणम्॥

करणप्रयोजकः कर्त्ता ॥१।१।२६॥

करणनिष्ठव्यापारजनकः कर्त्तृसंज्ञः स्यात्॥

कर्त्तरि प्रथमा ॥२।२।१२॥

कर्त्तरि वाच्ये नाम्नः प्रथमा विभक्तिः स्यात्। "[2]अज्ज जंबू......अप्पाणं भावेमाणे विहरति"॥

आमन्त्रणे च ॥२।२।१३॥

आमन्त्रणेऽर्थे प्रथमा स्यात्। भो जिण! भो जिणे! अज्जो! आउसं! रायं!॥

क्रियया कर्त्तुरिष्टं कर्म ॥१।१।२७॥

क्रियाजन्यफलवत्त्वेन कर्त्तुरिच्छाविषयः कर्मसंज्ञः स्यात्।

---

१ भिक्खु, गहवइ, गाग्त्थ, गाहावइ, गुव्व, घर, नत्तु, साहु, सिस्स, सीस, एते भिक्खुप्रभृतयः॥

२ आर्यजम्बूः........आत्मानं भावयन् विहरति। नाया० १–५॥

## अनुक्ते ॥२।२।१४॥

इत ऊर्द्ध्वमधिकारोऽयम् ॥

## कर्मणि द्वितीया ॥२।२।१५॥

अनुक्ते कर्मवाचकतिङ्कृदादिसमभिव्याहृते कर्मणि द्वितीया स्यात्। "अप्पाणं[1] भावेमाणे विहरति" "सेणिए राया ......कोडुंबियपुरिसे सद्दावेति"। अनुक्ते किम्। "मए...[2] पाउससिरी विउव्विया"॥

## अभेदान्वयि च ॥१।१।२८॥

क्रियया सह तादात्म्यसम्बन्धवच्च कर्मसंज्ञं वा स्यात्। "अभिमुहं[3] पंजलिउडे"। "ससद्दं गच्छइ[4]" "ससद्दं चिट्ठइ"

## समयमार्गयोरभिव्याप्तौ ॥२।२।१६॥

समयवाचकान्मार्गवाचकाच्च नाम्नो निरन्तरसम्बन्धे वाच्ये द्वितीया स्यात्। "संखेज्जाइं[5] जोयणाइं दंडं निसिरइ"। "एगं[6]-दिवसमवि ते रायसिरिं पासित्तए"। "तते[7] णं से वनदवे अड्ढाइज्जाइं रातिंदियाइं तं वणं झामेइ"॥

---

१ आत्मानं भावयन् विहरति, श्रेणिको राजा कौटुम्बिकपुरुषान् शब्दायते। नाया० १–१५॥ २ मया प्रावृट्श्रीर्विकुर्विता। नाया० १–१५। ३ अभिमुखं कृतप्राञ्जलिः। नाया० १–५॥ ४ सशब्दं गच्छति, सशब्दं तिष्ठति। नाया० १–३०॥ ५ संख्येयानि योजनानि दण्डं निःसरति (निःसारयति)। नाया० १–१४॥ ६ एकदिवसमपि ते राजश्रियं द्रष्टुम्। नाया० १–२४॥ ७ ततः स वनदवस्त्र्यर्द्धानि रात्रिंदिवानि तद्वनं ध्मापयति। नाया० १–२७॥

## कर्मयुगविवक्षितं चापादानादिभिः॥१।१।२९॥

अपादानादिविशेषैरविवक्षितं कर्मणा सह संबद्धमपि कर्मसंज्ञं स्यात्। "जयं चिट्ठति"[1] "जयं आसयति"। "जामेव दिसिं पाउब्भूता"[2]। "जं समयं सीयपरिसहं वेदेति नो तं समयं उसिणपरिसहं वेदेइ"[3]। "सुमिणपाढए विपुलं जीवियारिहं पीइदाणं दलयति"[4]। "जं रयणिं च णं पउमावती दारयं पयाया तं रयणिं च णं पोट्टिलावि......दारियं पयाया"[5]॥

## व्यापारवत्करणम्॥१।१।३०॥

धात्वर्थव्यापारस्य जनकत्वे सति तज्जन्यफलजनकं करणसंज्ञं स्यात्॥

## कर्तृकरणयोस्तृतीया॥२।२।१७॥

अनुक्ते कर्त्तरि करणे वा वाच्ये तृतीया स्यात्। "भगवया महावीरेणं अयमट्ठे पन्नत्ते" "विणएणं पज्जुवासमाणे"[6]।

---

१ यतं तिष्ठति, यतमानस्ते आश्रयति वा। नाया० १-१७॥ २ यस्यामेव दिशि प्रादुर्भूता। नाया० १-३७॥ ३ यस्मिन् समये शीतपरिषहं वेदयति नो तस्मिन् समये उष्णपरिषहं वेदयति। भग० ८-८॥ ४ स्वप्नपाठकाय विपुलं जीविताई प्रीतिदानं ददाति। नाया० १-१३॥ ५ यस्यां रजन्यां च पद्मावती दारकं प्रजाता तस्यां रजन्यां च पोट्टिलाऽपि ......दारिकां प्रजाता। नाया० १४-६४। ६ भगवता महावीरेणायमर्थः प्रज्ञप्तः, विनयेन पर्युपास्यमानः। नाया० १-५॥

"रायहंससरिसीए गतीए...उवागच्छइ" "तुमे देवाणुप्पिए सुमिणे दिट्ठे" । गिरिं नहेहिं खणह, अयं दन्तेहिं खायह, जायतेयं पाएहिं हणह, जे भिक्खुं अवमन्नह"। "महया महया सद्देणं उग्घोसेमाणा" । "तं भवियव्वं णं एत्थ कारणेणं" ।

## हेत्वर्थयोगे सर्वाः प्रायेण ॥२।२।४०॥

हेतुवाचकैः शब्दैर्योगे सर्वा एव विभक्तयो बाहुल्येन प्रयुज्यन्ते। गम्यमानाऽपि क्रिया कारकविभक्तीनां निमित्तम्। "धणेणं किं धम्मधुराहिगारे" । किं प्रयोजनमिति शेषः । "अलं बालस्स संगेणं" ।

## सहार्थयोगे गुणीभूते ॥२।२।१८॥

सहशब्दार्थकशब्दयोगेऽप्रधाने तृतीया स्यात् । भोच्चाण भोए सह इत्थियाहिं" । "धणं पभूयं सह इत्थियाहिं" ।

---

१ राजहंससदृश्या गत्या....उपागच्छति, त्वया देवानुप्रिये स्वप्नो दृष्टः । नाया० १–१० ॥ २ गिरिं नखैः खनथ, अयो दन्तैः खादथ, जाततेजसं पादैर्हथ, ये (यूयं) भिक्षुमवमन्यध्वम् । । उत्त० १२–२६ ॥ ३ महता महता शब्देनोद्घोषयन्तः । नाया० २–३८ । ४ तद्भवितव्यमत्र कारणेन । नाया० १–१५ ॥ ५ धनेन किं धर्मधुराधिकारे । उत्त० १४–१७ ॥ ६ अलं बालस्य संगेन । आया० १–१–५–६५ ॥ ७ भुक्त्वा भोगान् सह स्त्रीभिः । उत्त० १४–६ ॥ ८ धनं प्रभूतं सह स्त्रीभिः । उत्त० १४–१६ ॥

"जस्सत्थि[1] मच्चुणा सक्खं"। सहेति शेषः। "सेणिएणं[2] रन्ना सद्धिं"। "रायवर[3]कण्णाहिं सद्धिं एगदिवसेणं पाणिं गिण्हाविंसु"॥

## आधारेऽपि ॥२।२।१६॥

क्वचिदधिकरणेऽपि वाच्ये तृतीया स्यात्। "तेणं[4] कालेणं तेणं समएणं"। "जेणामेव[5] सेणिए राया तेणामेव" यस्मिन्नेव तस्मिन्नेवेत्यर्थः "मज्झे[6] णयगंभीरे"। "रायवरकण्णाहिं सद्धिं एगदिवसेणं पाणिं गिण्हाविंसु"॥

## गोत्तादिभ्योऽभेदे ॥२।२।२०॥

गोत्तादिशब्देभ्यस्तादात्म्ये वाच्ये तृतीया स्यात्। "कस्स[7]वंगोत्तेणं अज्जजंबू"। "उट्ठाए[8] उट्ठेति"। "नामेणं[9] मेहकुमारे"॥

## विनादियोगे ॥२।२।२१॥

विनादिशब्दयोगे तृतीया स्यात्। "नाणेणं[10] विणा न हुन्ति चरणगुणा"॥

१ यस्यास्ति मृत्युना (सह) सख्यम्। उत्त० १४-२७॥ २ श्रेणिकेन राज्ञा सार्द्धम्। नाया० १-१३॥ ३ राजवरकन्याभिः सार्द्धमेकदिवसे पाणिमग्राहयताम्। नाया० १-२०॥ ४ तस्मिन् काले तस्मिन् समये। नाया० १-४॥ ५ यस्मिन्नेव श्रेणिको राजा तस्मिन्नेव। नाया० १-६॥ ६ मध्ये नतगम्भीरे (मध्येन च गम्भीरे)। नाया० १-६॥ ७ काश्यपगोत्रेणार्यजम्बूः। नाया० १-५॥ ८ उत्थायोत्तिष्ठति॥ नाया० १-५॥ ९ नाम्ना मेघकुमारः। नाया० १-१७॥ १० ज्ञानेन विना न भवन्ति चरणगुणाः। उत्त० २८-३०॥

## प्रकारमुपेताल्लक्षणे ॥२।२।२२॥

कंचित्पदार्थं प्रति विशेषणत्वं प्राप्तान्नाम्नो व्यावर्त्येऽर्थे तृतीया स्यात्। "देवत्ताए उववराणो"[1]। "सीसिणित्ताए द-लयति"[2]॥

## कर्मान्वयेनेष्टं सम्प्रदानम् ॥१।१।३१॥

क्रियायाः कर्मसम्बन्धवत्त्वेन कर्तुरिच्छाविषयीभूतं स-म्प्रदानसंज्ञं स्यात् ॥

## सम्प्रदाने चतुर्थी ॥२।२।२३॥

अनुक्ते सम्प्रदाने वाच्ये चतुर्थी स्यात्। "[3]एगमेगाए भारियाए एगमेगं हिरण्णकोडिं दलयति" ॥

## तुमर्थेणाद्यन्तेभ्यः ॥२।२।२४॥

भावार्थकणादिप्रत्ययान्तेभ्यस्तुमर्थे वाच्ये चतुर्थी स्यात्। "दुल्लहे सवणयाए" दुर्लभः श्रोतुम्। "पासणयाए" द्रष्टुम्। "[4]अहमेयस्स अट्ठस्स अणरिहे सवणयाए" श्रोतुम्। "[5]पाय वन्दए पहारेत्थ गमणाए" गन्तुम् ॥

---

१ देवतयोपपन्नः। नाया० १–२१॥ २ शिष्यात्वेन ददाति। भग० ६–३३॥ ३ एकैकस्यै भार्यायै एकैकां हिरण्यकोटिं ददाति। नाया० १-२० ४ अहमेतस्यार्थस्यानर्हः श्रोतुम्। ५ पादौ वन्दितुं प्रधारितवान् (विकल्पितवान्–विचारितवान्) ॥

## तादर्थ्ये षष्ठी च ॥२।२।२६॥

तादर्थ्ये वाच्ये षष्ठी स्याच्चाच्चतुर्थी। वायणाए पुच्छणाए परियट्टणाए धम्माणुजोगचिंताए य उच्चारस्स य पासवणस्स य अइगच्छमाणा य निग्गच्छमाणा य''। एसं[2] मे णित्थारिए समाणे पच्छा पुरा हियाए सुहाए खेमाए णिस्सेसाए आणुगामियत्ताए भविस्सति'' ॥

## कर्त्तरि च ॥२।२।२५॥

क्वचित्कर्त्रर्थेऽपि चतुर्थी दृश्यते। "से केणं[3] जाणति अम्मयाओ के पुव्विं गमणाए के पच्छा गमणाए" गमनकर्त्ता ॥

## विभागेऽवधिरपादानम् ॥१।१।३२॥

विभागे योऽवधिः स्थिरः सोऽ[illegible]दानसंज्ञः स्यात्।

---

१ वाचनायै पृच्छनायै परिवर्त्तनायै धर्मानुयोगचिन्तायै चोच्चारायच प्रस्रवणाय चातिगच्छन्तश्च निर्गच्छ[illegible] नाया० १—२६॥ २ एषो (अर्थः) मे निस्तारितः सन् पश्चात् [illegible] हिताय सुखाय क्षेमाय निःश्रेयसायानुगामिकतायै भविष्यति ॥ नाया० १—२६ ॥ ३ अथ को जानात्यम्बतात ! कः पूर्वं गमनाय (गमकः) कः पश्चाद्गमनाय (गमकः)। नाया० १—२३ ॥

## अपादाने पञ्चमी ॥२।२।२७॥

अनुक्तेऽपादाने वाच्ये पञ्चमी स्यात् । "सयणिज्जाओ उट्ठेति२ त्ता पायपीढाओ पच्चोरुहति" । "गिहेहिन्तो पडिनिक्खमति"। "हत्थाओ[3] हत्थं संहरिज्जमाणे" "अंकाओ अंकं परिभुज्जमाणे" ॥

## मर्यादायामाङि ॥२।२।२८॥

सीमार्थकाकारयोगे पञ्चमी स्यात् ।"आसत्तमाओ[4] कुलवंसाओ" ॥

## हेतौ ॥२।२।२६॥

हेतौ वाच्ये पञ्चमी स्यात् । "नोइन्दियगेज्झ[5] अमुत्तभावा" "अमुत्तभावा वि य होइ निच्चो" ॥

## प्रभृत्यर्थयोगे ॥२।२।३०॥

आरभ्येत्याद्यर्थकशब्दयोगे पञ्चमी स्यात् । "इओ[6] तच्चे अईए भवग्गहणे" ॥

---

१ शयनीयत उत्तिष्ठति, उत्थाय पादपीठात्प्रत्यवरोहति। नाया० १ ६ ॥ २ गृहेभ्यः प्रतिनिष्क्रामति । नाया० १–१२ ॥ ३ हस्ताद्धस्तं संह्रियमाणो-ऽङ्कादङ्कं परिभोज्यमानः । नाया० १–१७ ॥ ४ आसप्तमात्कुलवंश्यात् । नाया० १–२३ ॥ ५ नोइन्द्रियग्राह्योऽमूर्त्तभावात्, अमूर्त्तभावादपि च भवति नित्यः ॥ उत्त० १४-१६ ॥ ६ इतस्तृतीयेऽतीते भवग्रहणे । नाया० १–२७ ॥

## शेषे षष्ठी ॥२।२।३१॥

कर्मादिभिन्ने सम्बन्धसामान्ये वाच्ये षष्ठी स्यात्। "[1]अंतो णं भंते माणुसुत्तरस्स पव्वयस्स"। "[2]तस्स णं सेणियस्स रण्णो धारणी नामं देवी होत्था"। "[3]तस्स कारगास्स अंतगमणं"। "[4]जस्स......सक्खं"॥

## समुदायादेकस्य पृथक्करणे सप्तमी च ॥२।२।३२॥

जातिगुणक्रियाभिः समुदायादेकस्य पृथक्करणं यतस्तस्मात्सप्तमी चात्षष्ठी स्यात्। "[5]दाणाण सेट्ठं अभयप्पदाणं सच्चेसु वा अणवज्जं वयन्ति"। "[6]एएसिं तीसाए महासुमिणाणं इमे चोद्दस" अत्र तीसादिशब्दानां नित्यैकवचनान्ततया बहुवचनान्तविशेषणमपि, तीसाए इति पदमेकवचनान्तम् ॥

## अन्तरायोगे च ॥२।२।३३॥

अन्तराशब्दयोगेऽपि षष्ठी स्यात्। "[7]भासमाणस्स वा णो अंतरा भासं भासिज्जा" ॥

## दूरान्तिकार्थैर्द्वितीयासप्तम्यौ च ॥२।२।३४॥

दूरार्थकसमीपाद्यर्थकशब्दयोगे द्वितीयासप्तम्यौ भवत-

---

१ अन्तो भगवन्! मानुषोत्तरस्य पर्वतस्य। भग० ८-८॥ २ तस्य श्रेणिकस्य राज्ञो धारणी नाम देवी अभूत्। नाया० १—६॥ ३ तस्य कारगास्यान्तगमनम्। नाया० १—१५॥ ४ यस्य....सख्यम्। नाया० १—१६॥ ५ दानानां श्रेष्ठमभयप्रदानं सत्येषु वाऽनवद्यं वदन्ति। सूय० १—६—२३॥ ६ एतेषां त्रिंशतो महास्वप्नानामिमे चतुर्दश। ७ भाषमाणं वा नो अन्तरा भाषां भाषेत ॥

भ्वात्षष्ठी। "भगवतो महावीरस्स अंतिए"। "तस्सेव मंड-लस्स अदूरसामन्ते"। "सेणियस्स रन्नो अन्तियाओ"। सेणियस्स रन्नो पुरओ"। "नगरस्स मज्झंमज्झेण"। "नगरं मज्झंमज्झेणं निग्गच्छति"। "नगरे मज्झंमज्झेण"॥

## दिगर्थैः पञ्चमी च ॥२।२।३५॥

दिग्वाचकशब्दैर्योगे पञ्चमी चात्षष्ठी स्यात्। "मेहस्स कुमारस्स पुव्वदक्खिणेणं"। "गंगाए महानदीए दाहिणिल्ले कूले"॥

## कर्त्रादौ कृति कर्मणि ॥२।२।३६॥

कर्तृकर्माद्यर्थकृद्योगे कर्मणि वाच्ये षष्ठी स्यात्। "कायराणं......दुरणुचरे" "ववसियस्स एत्थं किं दुक्करं करणयाए। "अहमेयस्स अट्ठस्स अणारिहे"॥ "सेणियस्स रण्णो इट्ठा"। कर्मादिवाचकेभ्योऽपि सम्बन्धमात्रविवक्षायां कृद्योगविरहेऽपि षष्ठी।

१ भगवतो महावीरस्यान्तिके। नाया० १-२३। २ तस्यैव मण्ड-लस्यादूरसामन्ते। नाया० १-२७॥ ३ श्रेणिकस्य राज्ञोऽन्तिकात्। नाया० १-१६॥ ४ श्रेणिकस्य राज्ञः पुरतः। नाया० १-१२॥ ५ नगरस्य मध्ये भूत्वा। नाया० १-१२॥ ६ नगरस्य मध्ये भूत्वा निर्गच्छति। नाया० २-३६॥ ७ नगरस्य मध्ये भूत्वा। नाया० २-४० ॥ ८ मेघस्य कुमारस्य पूर्वदक्षिणस्याम्। नाया० १-२४॥ ९ गङ्गाया महानद्या दक्षिणे कूले। नाया० १-२७॥ १० कातराणां........दुर-नुचरम्, व्यवसितस्यात्र किं दुष्करं करणतायाम्। नाया० १-२३॥ ११ अहमेतस्यार्थस्याऽनर्हः। नाया० १-१५॥ १२ श्रेणिकस्य राज्ञ इष्टा। नाया० १-८॥

"भीए[1] जम्मणजरमरणाणं"। "अम्हे[2] णं देवाणुप्पियाणं सिस्सभिक्खं दलयामो"। "अवसेसे[3] काए समणाणं णिग्गंथाणं निसट्ठे"। "तया[4] णं मम एयमट्ठं निवेदिज्जासि"॥

णमोयोगे ॥२।२।३७॥

णमोशब्दयोगे षष्ठी स्यात्। "णमोऽत्थु[5] णं अरिहंताणं भगवंताणं" "नमोऽत्थु णं समणस्स भगवओ महावीरस्स"॥

आश्रयोऽधिकरणम् ॥१।१।३३॥

कर्तृकर्मद्वारा क्रियाया आधारोऽधिकरणसंज्ञः स्यात्॥

सप्तम्यधिकरणे ॥२।२।३८॥

अनुक्तेऽधिकरणे वाच्ये सप्तमी स्यात्। "भद्दासणंसि[6] निसीयइ"॥

क्रियालक्षकक्रियायाम् ॥२।२।३९॥

अन्यस्याः क्रियाया लक्षणं यया क्रियया भवति तत्क्रियाश्रयवाचकात्सप्तमी स्यात्। "उट्ठियम्मि[7] सूरे सहस्सरस्सिमि दिणयरे तेयसा जलंते सयणिज्जाओ उट्ठेति"। आश्रयस्यौ-

१ भीतो जन्मजरामरणेभ्यः। नाया० १-२५॥ २ वयं देवानुप्रियेभ्यः शिष्यभिक्षां दद्महे। नाया० १-२५॥ ३ अवशेषः कायः श्रमणेभ्यो निर्ग्रन्थेभ्यो निसृष्टः। नाया० १-२८॥ ४ तदा ममैतमर्थं निवेदयेः। ओव० १२॥ ५ नमोऽस्तु अर्हद्भ्यो भगवद्भ्यः, नमोऽस्तु श्रमणाय भगवते महावीराय। नाया० १-३०॥ ६ भद्रासने निषीदति॥ ७ उत्थिते सूर्ये सहस्ररश्मौ दिनकरे तेजसा ज्वलति (सति) शयनीयादुत्तिष्ठति। नाया० १-१२॥

पश्लेषिकादिरूपस्य सर्वस्य विवक्षणात्। "मत्थए अंजलिं कट्टु" मस्तकसमीप इत्यर्थः॥

इति कारकप्रकरणम्॥

# अथाऽव्ययीभावसमासप्रकरणम्॥

**अनेकन्नामैकार्थे समासः॥१।१।३४॥**

विशिष्टैकार्थवाचकमनेकं प्रातिपदिकं समाससंज्ञं स्यात्॥

**पदसामर्थ्ये समासतद्धितौ॥२।३।१॥**

पदयोः पदानां वैकार्थीभावे समासतद्धितप्रत्ययौ भवतः। क्वचिदसामर्थ्येऽपि समासः। "गंगापुलिणवालुआसालिसए" ॥

**सुप् सुपा वा॥२।३।३॥**

सुबन्तं सुबन्तेन वा समस्यते॥

**अव्ययीभावः॥२।३।४॥**

अधिकारोऽयम्॥

**विभक्त्यर्थादिष्वव्ययम्॥२।३।६॥**

विभक्त्यर्थादिवाचकमव्ययं सुबन्तेन समस्यते सोऽव्ययीभावः॥

**समासे प्रथमानिर्दिष्टं पूर्वम्॥२।३।२॥**

समासशास्त्रे प्रथमानिर्दिष्टं पूर्वं प्रयोज्यम्।

१ मस्तकेऽञ्जलिं कृत्वा॥ २ गङ्गापुलिनवालुकासदृशके। कप्प० २—३॥

अज्झप्पं[1]। अच्चत्थं[2]। बहिट्ठाणं[3]। पाउप्पभाया[4] रयणी ॥

## अतिरतिक्रान्ते द्वितीयया ॥२।३।७॥

अतिक्रान्तेऽर्थेऽतिर्द्वितीयान्तेन समस्यते ॥

## सुपः समासतद्धितयोः ॥४।४।६५॥

समासतद्धितावयवस्य सुपो लोपः स्यात् ॥

## स नपुंसकमेकं च ॥२।३।५॥

अव्ययीभावसमाससंज्ञकं प्रायेण नपुंसकमेकवचनान्तं च प्रयोज्यम् ॥

## अनुपडी वीप्सादिषु ॥२।३।८॥

वीप्सादिष्वर्थेषु अनुपडी द्वितीयान्तेन समस्येते। समयं समयं त्ति=अणुसमयं[5]। अणुगामा[6]। अणुणइया[7]। दुवारं दुवारं त्ति=पडिदुवारं[8], पडिदारं। पडिसोयं[9] ॥

## असादृश्ये यथार्थकानि ॥२।३।६॥

सादृश्यभिन्नेऽर्थे यथार्थका अहादिशब्दा द्वितीयान्तेन समस्यन्ते। अहप्पहाणं[10]। अहाकप्पं[11]। अहातच्चं[12]। अहासंथणं[13]। जहत्थं[14]। जहिच्छं[15]। जहिच्छा ॥

---

१ अध्यात्मम्। २ अत्यर्थम्। ३ बहिःस्थानम्। ४ प्रादुष्प्रभाता रजनी। ५ अनुसमयम्। ६ अनुग्रामम्। ७ अनुनदिकम्। ८ प्रतिद्वारम्। ९ प्रतिस्रोतः। १० यथाप्रधानम्। ११ यथाकल्पम्। १२ यथातथ्यम्। १३ यथासंस्तनम्। १४ यथार्थम्। १५ यथेच्छम् ॥

चयेन जादयः समुच्चये ॥२।३।१०॥

जादिशब्दाश्चशब्देन समुच्चयेऽर्थे समस्यन्ते । जच्चेव[1] । तच्चेव[2] । जीवच्चेव[3] । अजीवच्चेव[4] ॥

आयावदर्थका मर्यादादौ ॥२।३।११॥

मर्यादाद्यर्थे आशब्दो यावदर्थकाश्चशब्दा द्वितीयान्तेन समस्यन्ते । आयाहिणपयाहिणं[5] । जावंतिम्मं[6] । जावद्व्वं[7] । आवकहियं[8] । आवकहा[9] ॥

आभिमुख्यादावभिः ॥२।३।१२॥

आभिमुख्यादिष्वर्थेषु अभिर्द्वितीयान्तेन समस्यते । अब्भिन्तरं[10], अब्भंतरं ॥

पडेरेक्केन समासे दीर्घः ॥१।३।१६॥

पडिशब्दस्यैक्कशब्देन समासे पूर्वस्वरस्य दीर्घः स्यात् ॥

एर्यः कात्पूर्वः परो वा ॥१।३।२०॥

पडेः परस्यैक्कशब्दस्यैकारस्य यकारो वा स्यात्, स च कात्पूर्वं परो वा प्रयोज्यः । एक्कमेक्कं पडिति=पाडियक्कं[11], पाडिक्कयं, पाडिएक्कं ॥

प्रभृतिना पञ्चमी ॥२।३।१३॥

पञ्चम्यन्तं प्रभृतिशब्देन सह समस्यते ॥

---

१ यश्चैव । २ तच्चैव । ३ जीवश्चैव । ४ अजीवश्चैव । ५ आदक्षिणप्रदक्षिणम् । ६ यावदिदम् । ७ यावद्द्रव्यम् । ८ यावत्कथिकम् । ९ यावत्कथम् । १० अभ्यन्तरम् । ११ प्रत्येकम् ॥

## जादयो* व्यञ्जनान्ताः ॥१।३।२२॥

समासे उत्तरपदे परे जप्रभृतिशब्दा व्यञ्जनान्ताः प्रयोज्याः। जप्पंभिई[1]। तप्पंभिई[2]। आउक्कालो[3]। आउक्करणं[4]। चउक्कसाया[5]। चउद्दिसिं[6]। छज्जीवणिया[7]। छद्दंतो[8]। तमुक्काए, तमुकाए[9]। पुढविक्काइया[10]। वाउक्काइया[11]। खुप्पिवासा[12] ॥

## उवः सामीप्ये षष्ठ्या ॥२।३।१४॥

सामीप्यार्थक उवशब्दः षष्ठ्यन्तेन समस्यते। अंगस्स समीपं=उवंगं[13] ॥

## कुत्सादुष्टादौ कुदू प्रथमया ॥२।३।१५॥

कुत्साद्यर्थकः कुशब्दो दुष्टाद्यर्थको दुशब्दश्च प्रथमान्तेन सह समस्यते। जादिगणपठितत्वेन व्यञ्जनान्तत्वात्, दुद्दंसणं[14]। दुद्दिनं[15] ॥

## कोरादोतौ ॥१।३।२३॥

कुशब्दस्याकार ओकारश्चान्तादेशो वा स्यादुत्तरपदे।

*जद्, तद्, महद्, आउस्,चउर्, खुह्, छस्, विहस्, वणस्, वायुक्, पुढविक्, तमस्, दुर्, निर्, पुनर्, धनुस्, जावत्, तावत्, इत्यादिराकृतिगणोऽयम् ॥

१ यतः प्रभृतिः। २ ततः प्रभृतिः। ३ आयुष्कालः। ४ आयुष्करणम्। ५ चतुष्कषायाः। ६ चतुर्दिक्। ७ षट्जीवनिका। ८ षट्दन्तः। ९ तमस्कायः। १० पृथिवीकायिकाः। ११ वायुकायिकाः। १२ क्षुत्पिपासे। १३ उपाङ्गम्। १४ दुर्दर्शनम्। १५ दुर्दिनम् ॥

कापुरिसो, कोपुरिसो, कुपुरिसो[1] । कादंडिमो, कोदंडिमो, कुदंडिमो[2] ॥

निष्क्रान्तादौ पञ्चम्या निः ॥२।३।१६॥

निष्क्रान्ताद्यर्थको निःशब्दः पञ्चम्यन्तेन समस्यते । णीसंको[3] ॥

निरोऽभ्यवानूदराणाम् ॥१।३।३८॥

निरः परेषामभि-अव-अनु-उदर-शब्दानामादेर्वृद्धिः स्यात् । णिराभिरामो[4] । णिरावकंखी[5] । णिराणुकंपो[6] । णिरोदरो[7] ॥

इत्यव्ययीभावसमासप्रकरणम् ॥

# अथ तत्पुरुषसमासप्रकरणम् ॥

तत्पुरुषः ॥२।३।१७॥

अधिकारोऽयम् ॥

भेदकं भेद्येन कर्मधारयः ॥२।३।१८॥

विशेषणं विशेष्येण समानाधिकरणेन समस्यते स समासः कर्मधारयः[8] । [illegible] । [illegible] । [illegible] ॥

तत्र पूर्वं पुंवत् ॥२।३।१९॥

कर्मधारयसमासे पूर्वपदस्य पुंवद्भावः स्यात् । वुड्ढकुमारी[10] ।

१क[illegible]ः । २कुदण्डिमः । ३निःशङ्कः । ४निरभिरामः । ५निरवकाङ्क्षी । ६[illegible]ः । ७निरुदरः । ८[illegible]ः । ९[illegible]ः । १० वृद्धकुमारी ॥

## एतकाभ्यां वतियस्योत्तरपदे ॥४।४।७०॥

आभ्यां परस्य वतियस्य लोपः स्यादुत्तरपदे परे । "तमुक्काए णं भंते! के महालए[1]............?, एमहालये णं गोयमा ! तमुक्काये पन्नत्ते" । 'क्वचित्तियस्य लोपः' केवच्चिरं[2] केवचिरं ॥

## पत्तामोडादिषु परम् ॥२।३।२०॥

एषु पूर्वप्रयोगार्हं परं स्यात् । आमोडाणि पत्ताणि = पत्तामोडाणि[3]। अंजलिउडे[4] । अनासाच्छिन्नं[5] । आइण्णजणमणुस्सा[6]। अद्धभरहो[7] ॥

## द्वितीया पत्तादिभिः ॥२।३।२१॥

पत्तादिप्रकृतिकैः प्रथमान्तैः सह द्वितीयान्तं समस्यते स तत्पुरुषः ॥

## दयादीनां पत्तादौ ॥२।३।२२॥

दयादिशब्दानां पत्तादिशब्दे परे ह्रस्वान्तादेशो बहुलं स्यात्। दयपत्तो[8] ॥

## आसो रुट्ठस्य तः ॥१।४।११४॥

आसुशब्दात्परस्य रुट्ठशब्दस्योपधायास्तकारादेशः स्यात् । आसुरुत्तो[9] ॥

---

१ तमस्कायो भगवन्! कियन्महान्...?, एतावन्महान् गौतम ! तमस्कायः प्रज्ञप्तः । भग० ६–५॥ २ कियच्चिरम् । ३ आमोडितपत्राणि। ४ कृताञ्जलिः । ५ अच्छिन्ननासिकम् । ६ आकीर्णजनमनुष्या । (जनमनुष्याकीर्णा) । ७ भरतार्द्धम् । ८ दयाप्राप्तः । ९ आशुरुष्टः ॥

## तृतीयापञ्चमीसप्तम्यश्च ॥२।३।२३॥

तृतीयाद्यन्तं प्रथमान्तेन समस्यते स तत्पुरुषः । विउप्पगडा[1] । तिण्णाणोवगए[2] । उदउल्लं[3] ॥

## खंडादीना*मुत्तरपदे ॥१।३।२१॥

खण्डादिशब्दानामुत्तरपदे परे दीर्घोऽन्तादेशो बहुलं स्यात् । खंडाभेदो[4] । अट्टादंडो[5] । अप्पाबहुगं[6] । अप्पाबहुत्तं[7] । आणापाणं[8] । पासामिओ[9] । अंधारूवं[10] । आवीकम्मं[11] ॥

## दकस्य दः ॥१।४।४२॥

दकशब्दस्य द इत्यादेशः स्यादुत्तरपदे । दाकलसो[12] । दाकुम्भो[13] ।

## एत्पोरस्य कच्चे ॥१।३।३९॥

पोरशब्दस्यैकारान्तादेशः स्यात् कच्चशब्दे परे । पोरेकच्चं[14] ॥

१ विद्वत्प्रकटाः (प्रकृताः) २ त्रिज्ञानोपगतः । ३ उदकार्द्रम् । ४ खंडभेदः । ५ अर्थदण्डः । ६ अल्पबहुकम् । ७ अल्पबहुत्वम् । ८ आनपानः । ९ पाशमृगः, पार्श्वमितः, पार्श्वमृगः । १० अन्धरूपम् । ११ आविष्कर्म । १२ दककलशः । १३ दककुम्भः । १४ पौरस्कृत्यम् ॥

*खण्ड, अट्ट, अप्प, आण, पास, अंध, आविर्, एक्क, सच्च, उच्च, सम्म, दक, मह, इति खण्डादिराकृतिगणः ॥

मणाद्वस्य मः ॥१।४।११५॥

मणशब्दात्परस्योत्तरपदस्यावशब्दस्योपधाया मकारादेशः स्यात्। आविज्जइ त्ति—आवो, मणसा आवो=मणामो[1] ॥

पितुप्रभृतीनामिः ॥१।३।४०॥

पित्रादीनामुत्तरपदे परे इकारोऽन्तादेशो वा स्यात्। अम्मापिइसमाणे[2]। माउपिउसुजाते[3]। भाइसमाणे[4]। भाउसयं[5] ॥

सहस्तृतीयया ॥२।३।२४॥

सहशब्दस्तृतीयान्तेन सह समस्यते ॥

सहसमानयोः सः ॥१।४।४३॥

अनयोः सकारादेशो बहुलं स्यादुत्तरपदे परे। साहिकरणं[6]। सअंडं[7]। सअंते[8]। सअट्ठो[9]। सहपुत्तो[10]। सहसंबुद्धो[11] ॥

णखपदस्य णप्फयः सात् ॥१।४।४४॥

सात्परस्य णखपदशब्दस्य णप्फय इत्यादेशः स्यात्। सणप्फए[12] ॥

सात्पक्खस्य ॥१।३।४१॥

सात्परस्य पक्खशब्दस्येकारान्तादेशः स्यात्। सपक्खिं[13] ॥

---

१ मन आपः, मनोऽमः। २ अम्बापितृसमानः। ३ मातापितृसुजातः। ४ भ्रातृसमानः। ५ भ्रातृशतम्। ६ समानाधिकरणम्। ७ साण्डम्। ८ सान्तः। ९ सार्थः। १० सपुत्रः। ११ ससम्बुद्धः। १२ सनखपदः। १३ सपक्षः ॥

## चतुर्थी तादर्थ्ये ॥२।३।२५॥

तादर्थ्ये विहिता या चतुर्थी तदन्तं प्रथमान्तेन समस्यते अट्ठादंडो[1] ॥

## षष्ठी च शेषे ॥२।३।२६ ॥

कर्मादिकारकभिन्ने सम्बन्धसामान्ये विहिता या षष्ठी तदन्तं प्रथमान्तेन समस्यते । तदाहारो[2] । तदुप्पाओ[3] ॥

## कारादिभिश्च ॥२।३।२७॥

कारादिशब्दप्रकृतिकैः सुबन्तैः सह षष्ठ्यन्तं समस्यते । अंधगारो[4] । मणियारो[5] । सुवण्णयारो[6] ॥

## पुव्वादयोऽहेन षष्ठ्या ॥२।३।२८॥

पुव्वादिशब्दाः प्रथमान्ताः षष्ठ्यन्तेनाहशब्देन समस्यन्ते ॥

## अहस्याण्हः ॥१।४।४५ ॥

समासे उत्तरपदभूतस्याहशब्दस्याण्ह इत्यादेशः स्यात् । पुव्वण्हं[7] । मज्झण्हं[8] ॥

## सप्तम्या अलोपः ॥२।३।२६ ॥

समासावयवभूतायाः सप्तम्याः क्वचिल्लोपो न भवति । अन्तेवासी । उदएचरो[9] । कण्ठेगुणो[10] । कण्ठेमालको[11] ॥

## संख्यार्थकास्समानाधिकरणैः समाहारे ॥२।३।३२॥

संख्यावाचकाः शब्दाः समानाधिकरणैः सुबन्तैः सह समाहारेऽर्थे समस्यन्ते ॥

---

१ अर्थदण्डः । २ तदाहारः । ३ तदुत्पादः । ४ अन्धकारः । ५ मणिकारः । ६ सुवर्णकारः । ७ पूर्वाह्णम् । ८ मध्याह्णम् । ९ उदकेचरः । १० कण्ठेगुणः । ११ कण्ठेमालकः ।

## निपदे दस्य तलोपौ ॥१।४।२६॥

निपदशब्दे दकारस्य तकारलोपौ पर्यायेण भवतः। पदस्य वकारे, तिवई[1], तिवती, निवदी। निषेधार्थकैः अ-अण-ण-शब्दैः समासे, अथिरं[2]। अबहुस्सुए[3]। अणट्टादण्डो[4]। अणेक्कावाई[5]। णण्णत्थ[6]। णण्णहा[7] ॥

## रात्तेरुत्तरपदस्यात् ॥१।४।८०॥

उत्तरपदभूतस्य रात्तिशब्दस्याकारान्तादेशः स्यात्। चउरायं[8]। चरमवरिसारत्तम्[9] ॥

## जहण्णादीनामणुक्कोसादिषु मक् ॥४।४।७॥

जहण्णादिशब्दानामणुक्कोसादिषु परेषु मगागमः स्यात्समासे। "अजहण्णमणुक्कोसो[10]" "अदुक्खमसुहा" "अंगमंगाइं" "सामाइयमादियाइं"। गब्भमुद्देसो[11]। अणंतभागमब्भहियं[12]। जावंताव[13] ॥

## खंधादावारस्यावस्य लोपः ॥१।४।८७॥

खंधशब्दात्परस्यावारस्यावस्य लोपो वा स्यात्। खंधारो[14]। खंधावारो ॥

## पायवस्योवगमणे यस्य वस्य यवयोश्च ॥१।४।४८॥

पायवशब्दस्योवगमणे परे यस्य वस्य च यवद्वयस्य पर्या-

---

१ त्रिपदी। २ अस्थिरम्। ३ अबहुश्रुतः। ४ अनर्थदण्डः। ५ अनेकवादी। ६ नान्यत्र। ७ नान्यथा। ८ चतूरात्रम्। ९ चरमवर्षारात्रम्। १० अजघन्यानुत्कर्षः, अदुःखासुखा, अङ्गाङ्गानि, सामायिकादीनि। निर० ३-४॥ ११ गर्भोद्देशः। १२ अनन्तभागाभ्यधिकम्। १३ यावत्तावत्। १४ स्कन्धवारः ॥

येण लोपः स्यात्। पावोवगमणं[1], पाओवगमणं, पाउवगमणं ॥

अधोरवधेर्वस्य ॥१।४।४६॥

अधोशब्दात्परस्यावधेर्वस्य लोपः स्यात्। अधोऽधी[2]। अधोऽही ॥

जत्तद्भ्यामनन्तरस्य ॥१।३।४३॥

आभ्यां परस्यानन्तरशब्दस्य रेर्दीर्घः स्यात्। दस्य यकारे, जयाणन्तरं[3]। तयाणन्तरं[4] ॥

पुव्वस्य पौ ॥१।३।४२॥

पुव्वशब्दस्येकारोऽन्तादेशो वा स्यात्पिशब्दे परे समासे। जहण्णादित्वात्, पुव्विंपि[5], पुव्वंपि ॥

आगंतारस्यागार आरस्य ॥१।४।५०॥

आगन्तारशब्दस्यागारशब्दे परे आरस्य लोपो वा स्यात्। आगन्तगारं[6] ॥

द्वयोरगंतारः ॥१।४।५१॥

आगंतारागारशब्दयोरगंतार इत्यादेशः स्यात्। अगंतारं ॥

इज्जाया एसस्येसः ॥१।४।५२॥

इज्जाशब्दात्परस्यैसस्येसादेशः स्यात्। पूर्वस्वरस्य लोपे, इज्जिसो[7] ॥

---

१ पादपोपगमनम्। २ अधोऽवधिः। ३ यदनन्तरम्। ४ तदनन्तरम्। ५ पूर्वमपि। ६ आगन्त्रागारः। ७ इज्यैषः ॥

### इमात्सन्धौ प्रथमायाः ॥२।३।३०॥

इमशब्दात्सन्धिशब्दे परे प्रथमाया अलोपः स्यात् । [१]अयंसंधी ॥

### एयारूवे वा ॥२।३।३१॥

इमशब्दादेयारूवशब्दे परे प्रथमाया अलोपो वा स्यात् । [२]अयमेयारूवे, इमेयारूवे ॥

### बिहवणाभ्यां पतेः फसौ ॥१।४।५३॥

आभ्यामुत्तरस्य पतिशब्दस्यादेः फ स इत्येतावादेशौ पर्यायेण भवतः। [३]वणप्फई। वणस्सई। [४]बिहप्पती, बिहप्फती, बिहस्सती ॥

### ओर्जसादीनामुत्तरपदे ॥१।३।४४॥

जसादिशब्दानामुत्तरपदे परे ओकारान्तादेशो बहुलं स्यात् । [५]जसोकित्ती, जसकित्ती । [६]जसोकामी । [७]जसोजीवियं, जसजीवियं । [८]जसोवन्तो, जसवन्तो । जसोमन्तो, जसमन्तो । [९]जसोचंदे । [१०]जसकरो । [११]अहोणिसि । [१२]अयोकवलं । [१३]अयोकुंभी । [१४]अयोगोलो । [१५]अयोघणो । [१६]अयोमयं । [१७]अन्नोन्नं । [१८]मणोन्नं । [१९]मणोरमो । [२०]मणोसिला । [२१]मणोहरो । [२२]मणकरणं । [२३]मणजोगो ।

---

१ इदंसन्धिः । २ अयमेतद्रूपः । ३ वनस्पतिः । ४ बृहस्पतिः । ५ यशःकीर्तिः । ६ यशःकामी । ७ यशोजीवितम् । ८ यशस्वान् । ९ यशश्चन्द्रः । १० यशस्करः । ११ अहर्निशम् । १२ अयःकवलम् । १३ अयस्कुम्भी । १४ अयोगोलः । १५ अयोघनः । १६ अयोमयम् । १७ अन्योऽन्यम् । १८ मनोज्ञम् । १९ मनोरमः । २० मनःशिला । २१ मनोहरः । २२ मनःकरणम् । २३ मनोयोगः ॥

मणादंडो[1] । मणपओगो[2] । तमोकसियं[3] । दोग्गती[4] । तवोकम्मं[5] तवोमयं[6] । बाहुलकात्कचिन्नित्यम् । मणोरहो[7] । सोग्गई[8] ॥

## उत्ते यस्य ॥१।४।५४॥

तेयशब्दस्योत्तरपदे परे यकारस्योकारो वा स्यात् । तेउकाए[9] । तेउप्पभो[10] । तेउलेसो[11], तेयलेसा । तेयलेस्सो[12] ॥

## चरेऽहेराः ॥१।३।४५॥

अहेशब्दस्य चरशब्दे परे आकारोऽन्तादेशः स्यात् । अहाचरो[13] ॥

## पायस्य मूले यस्य ॥१।४।५५॥

पायशब्दस्य यस्य लोपो वा स्यान्मूलशब्दे परे । पामूलं[14], पायमूलं । (गरुडासणादीनां सिद्धये मध्यपदस्य नित्यं वक्तव्यः) गरुडसरिसमासणं=गरुडासणं[15] । उदअपुण्णमुदरं=उद-ओदरं[16] । पुव्वमारब्भ पच्छिमो=पुव्वपच्छिमो[17] ॥

॥ इति तत्पुरुषसमासप्रकरणम् ॥

# अथ द्वन्द्वसमासप्रकरणम् ॥

## अनेकं समूहे ॥२।३।३३॥

समुदायेऽर्थे वर्त्तमानमनेकं प्रथमान्तं प्रथमान्तेन सह वा

---

१ मनोदण्डः । २ मनःप्रयोगः । ३ तमःकाषिकः । ४ दुर्गतिः । ५ तपःकर्म । ६ तपोमयम् । ७ मनोरथः । ८ सद्गतिः । ९ तेजस्कायः । १० तेजःप्रभः । ११ तेजोलेश्या । १२ तेजोलेश्यः । १३ अधश्चरः । १४ पादमूलम् । १५ गरुडासनम् । १६ उदकोदरम् । १७ पूर्वपश्चिम ॥

समस्यते। पिज्जो य दोसो य=पिज्जदोसा[1]। पण्हवागरणं[2]। सीउ-ण्हं[3], सीउसिणं॥

दियानिस्योरम्वोत्तरपदयोः ॥१।३।४६॥

द्वन्द्वे उत्तरपदभूतयोर्दियानिसिशब्दयोरमन्तादेशो वा स्यात्। राइंदियं[4]। अहोनिसं[5]। अहोनिसि॥

आणात्पाणस्योत् ॥१।३।४७॥

आणशब्दात्परस्य पाणशब्दस्योकारान्तादेशो वा स्यात्। आणापाणू[6], आणापाणो॥

॥ इति द्वन्द्वसमासप्रकरणम् ॥

# अथ बहुव्रीहिसमासप्रकरणम् ॥

अप्रथमाऽन्यपदार्थे प्रथमा ॥२।३।३४॥

प्रथमाभिन्नान्यपदार्थे वर्तमानं प्रथमान्तं समानाधिकरणेन स-मस्यते। उदिण्णाणि बलवाहणाणि जस्स स उदिण्णबलवाह-णो[7]॥

अत्र लिङ्गमन्यपदार्थस्य ॥२।३।३५॥

अस्मिन् समासेऽन्यपदार्थस्यैव लिङ्गं स्यात्। एगाऽऽहच्चा जत्थ एगाहच्चं[8]॥

१ प्रेमद्वेषौ। २ प्रश्नव्याकरणम्। ३ शीतोष्णम्। ४ रात्रिंदिवम्। ५ अहर्निशम्। ६ आनपानः। ७ उदीर्णबलवाहनः। उत्त० १८-१॥ ८ एकाऽऽहत्यम्॥

## क्वचिद्व्यधिकरणेनापि ॥२।३।३६ ॥

उक्तसमासः क्वचिद्व्यधिकरणेनापि ...। तंमि अप्पियं करणं जेणं तदप्पियकरणे[1]। कण्ठेकालो[2]। कण्ठेमालो[3] ॥

## अस्मात्को वा ॥२।३।३७

उक्तसमासात्परः कप्रत्ययो वा स्यात् ॥

## इस्के पूर्वस्य ॥२।३।३८॥

कप्रत्यये परे पूर्वस्वरस्येकारो वा स्यात्। "सत्तसत्तमियं भिक्खुपडिमं"[4] ॥

## निषेधार्थकेभ्योऽस्त्यर्थस्य लोपः ॥२।३।३६॥

निषेधवाचकेभ्यः अ-अण-ण-शब्देभ्यः परस्य वर्त्तमानार्थकशब्दस्य लोपः स्यादुक्तसमासे। ण विज्जमाणा उऊ जीसे सा अणोउया[5] ॥

## दिग्वाचका मध्ये ॥२।३।४०॥

दिगर्थकाः शब्दा मध्ये वाच्ये समस्यन्ते। उत्तराए पुरत्थिमाए य अन्तरालं जा दिसा सा उत्तरपुरत्थिमा[6] ॥

## ओदणादारस्य ॥१।३।४८॥

अणशब्दात्परस्यारशब्दस्यादेरोकारः स्यात्। णत्थि आरं पारं जस्स स अणोरपारे[7] ॥

## अवदग्गस्य वा ॥१।३।४९॥

अणशब्दात्परस्यावदग्गशब्दस्यादेरोकारो वा स्यात्।

१ तदर्पितकरणः। २ कण्ठेकालः। ३ कण्ठेमालः। ४ सप्तसप्तमिकां भिक्षुप्रतिमाम्। ओव० १५। ५ अनृतुका। ६ उत्तरपूर्वा। ७ अनारपारः ॥

णत्थि अवदग्गमन्तं जस्स सो अणोवदग्गे[1], अणवदग्गे ॥

## आमोसादोसहेरोसस्य ॥१।३।७९॥

आमोसशब्दात्परस्यौसहिशब्दस्यौसस्य लोपः स्यात् । आमोसही[2] ॥

## ईरुद्धस्य मुहे ॥१।३।५२॥

उद्धशब्दस्य मुहशब्दे परे ईकारान्तादेशः स्यात् । उद्धी-मुहो[3] ॥

## त्तुमुमोः काममणयोः ॥४।४।६९॥

त्तुम्-उं-प्रत्यययोरन्त्यस्य लोपो वा स्यात् । काममणशब्दयोः परयोः । काउकामो[4] । गंतुमणो[5] । संपाविउकामो[6], संपाविउंकामो ॥

## सरिसस्य तयावययोः ॥४।४।६७॥

सरिसशब्दस्य तयावयशब्दयोः परयोरन्त्यस्य लोपः स्यात् ॥

## तये सस्य तः ॥४।४।६८॥

सरिसशब्दस्य सकारस्य तकारः स्यात्तयाशब्दे परे । सरित्तया । सरिव्वया । "दो[7] भंते !···सरित्तया सरिव्वया" ॥

१ अनवदग्रः । २ आमर्पौषधिः । ३ ऊर्ध्वमुखः । ४ कर्त्तुकामः । ५ गन्तुमनाः । ६ सम्पादितुकामः । ७ [illegible] भगवन्!···सदृक्त्वचौ सदृग्वयसौ [illegible] ॥

अच्छेः ॥१।३।५३॥

उत्तरपदस्याच्छिशब्दस्याकारान्तादेशः स्यात् । "हरिमेलामउलमल्लियच्छाणं"[1] ॥

दिवड्ढाड्ढाइज्जाद्धुट्टाः सार्द्धैकद्वयत्रयेषु॥१।४।५६॥

दिवड्ढ-अड्ढाइज्ज-अद्धुट्ट-शब्दाः क्रमेण सार्द्धैकसार्द्धद्वयसार्द्धत्रयेष्वर्थेषु निपात्यन्ते । दिवड्ढं[2] । अड्ढाइज्जं[3] । अद्धुट्टं[4] ॥

असौ पस्य फः ॥१।४।५७॥

पोपसर्गस्य फादेशः स्यादसुशब्दे परे । पगया असू जत्थ तं फासुयं[5] ॥

एकादयः संख्यायां दसादिभिरधिकान्ताः ॥२।३।४१॥

संख्यावाचका अधिकशब्दान्ता एकादयः शब्दा दसादिशब्दैः संख्यावाचकैः सह समस्यन्ते ॥

एकार्थकानां दसपण्णणउइषु दीर्घः ॥१।३।५४॥

एकत्वसंख्यावाचकानामेक-एक्क-एग-इक्क-इग-शब्दानां दीर्घोऽन्तादेशः स्याद्दस-पराण-राउइ-शब्देषु परेषु । एकारस[6] । एक्कारस । एकाणउई[7] । एकावराणं[8] ॥

इगेगस्य ॥१।४।५८॥

इगशब्दस्य सस्वरगकारस्य लोपो वा यालशब्दे परे ।

---

१ हरिमेलामुकुलमल्लिकाक्षाणाम् । औव० ३१ । २ द्वयर्द्धम् । ३ अर्द्धतृतीयम् । ४ अर्द्धचतुष्कम् । ५ प्रासुकम् । ६ एकादश । ७ एकनवतिः । ८ एकपञ्चाशत् ॥

## चत्तालीसस्य यालतालीसौ ॥१।४।५६॥

उत्तरपदस्य चत्तालीसशब्दस्यैतावादेशौ पर्यायेण वा स्तः। इयालं[1], इगयालं, एगतालीसं।

## दोर्वेबी ॥१।४।६०॥

दुशब्दस्य बे बि इत्यादेशौ पर्यायेण भवतः। बेइ[2]न्दिया। बिदलं[3]। बिसरीरं[4]॥

## वा संख्यार्थके ॥१।४।६१॥

दुशब्दस्य बाऽऽदेशः स्यात्संख्यावाचकशब्दे परे। बारस[5]। बावन्नं[6]। बाणउई[7]। बायालं[8]॥

## दुवा दसे ॥१।४।६२॥

समासे दसशब्दे परे दुशब्दस्य दुवा इत्यादेशः स्यात्। दुवालस[9]॥

## तेरेः ॥१।३।५६॥

संख्यावाचकस्य तिशब्दस्यैकारान्तादेशः समासे उत्तरपदे परे। तेरस[10]। तेवीसं[11]। तेत्तीसं[12], तेत्तीसा। तेयालं[13], तेयाली। तेवण्णं[14]। तेवग्गं[15]। तेइंदिया[16]॥

## चतोरतःपूर्वस्य ॥१।३।५७॥

समासे पूर्वपदस्य चतुशब्दस्याकारस्य दीर्घः स्यात्। चाउ[17]-

१ एकचत्वारिंशत्। २ द्वीन्द्रियाः। ३ द्विदलम्। ४ द्विशरीरम्। ५ द्वादश। ६ द्विपञ्चाशत्। ७ द्विनवतिः। ८ द्विचत्वारिंशत्। ९ द्वादश। १० त्रयोदश। ११ त्रयोविंशतिः। १२ त्रयस्त्रिंशत्। १३ त्रिचत्वारिंशत्। १४ त्रिपञ्चाशत्। १५ त्रिवर्गः। १६ त्रीन्द्रियाः। १७ चतुष्कोणम्॥

कोणं। चाउद्दसी ॥

## चोः सङ्ख्यावाचके ॥१।३।५८॥

चतुशब्दस्य चो इत्यादेशः स्यात्संख्यावाचके परे। चोद्दस[2]। चोवीसं[3]। चोतीसं[4], चोत्तीसं। चोयालं[5], चोयालीसं। चोसट्ठि[6],चउसट्ठि ॥

## सत्तरेर्हश्च ॥१।४।६५॥

उत्तरपदस्य सत्तरिशब्दस्यादेर्हकारश्चकाराद्वकारो वा स्यात्। चोहत्तरिं[7], चोवत्तरिं ॥

## चतुरचुलावसीतौ ॥१।४।६६॥

चतुशब्दस्य चतुर चुल इत्यादेशो वा स्तोऽसीतिशब्दे परे। चउरासीइं[8], चुलसीइं ॥

## पणस्य द्विः ॥१।४।११६॥

पणशब्दस्योपधाया द्वित्वं वा स्यात्समासे। पंण्णरस[9], पनरस। पण्णहत्तरं[10], पनहत्तरं। पण्णवीसं[11], पणवीसं।

## पणाल्लोपः ॥१।४।६४॥

पणशब्दात्परस्य सट्ठिशब्दस्यादेर्लोपः स्यात्। पण्णट्ठिं[12] ॥

## छाद्दयोश्च ॥१।३।५५॥

अनयोर्दीर्घोऽन्तादेशः स्यात्प्रायेण ॥

---

१ चतुर्दशी। २ चतुर्दश। ३ चतुर्विंशतिः। ४ चतुस्त्रिंशत्। ५ चतुश्चत्वारिंशत्। ६ चतुःषष्टिः। ७ चतुःसप्ततिः। ८ चतुरशीतिः। ९ पञ्चदश। १० पञ्चसप्तति। ११ पञ्चविंशति। १२ पञ्चषष्टिः ॥

## सट्ठेर्वः ॥१।४।६३॥

उत्तरपदस्य सट्ठिशब्दस्यादेर्वकारो वा स्यात् । छावट्ठिं, छासट्ठिं[1] । छायालीसं[2] ।अट्ठावण्णं[3] । अट्ठावयं[4]॥

## छस्य सोऽदसे ॥१।४।६७॥

छशब्दस्य सो इत्यादेशः स्याद्दसशब्दे परे । सोलस[5] । छलसीइं[6] ॥

## सत्तस्य वीसादौ ॥१।४।६८॥

पूर्वपदस्य सत्तशब्दस्य दीर्घोऽन्तादेशः स्याद्वीसादौ परे। सत्तावीसं[7] । सत्तावन्नं[8] ॥

## सीयाले ॥१।४।६९॥

सत्तशब्दस्य सी इत्यादेशः स्याद् यालशब्दे परे । सीयालं[9], सीयालीसं ॥

## दसस्य रलौ ॥१।४।७०॥

उत्तरपदस्य दसशब्दस्यादेर्दकारस्य रेफो लकारश्च स्यात् ॥

## अट्ठात्सस्य ॥१।४।७१॥

अट्ठशब्दात्परस्य दसशब्दस्य सकारस्य लोपो वा स्यात् । अट्ठार[10] । अट्ठारस ॥

१ षट्षष्टिः । २ षट्चत्वारिंशत् । ३ अष्टपञ्चाशत् । ४ अष्टापदं, अर्थपदम् । ५ षोडश । ६ षडशीतिः । ७ सप्तविंशतिः । ८ सप्तपञ्चाशत् । ९ सप्तचत्वारिंशत् । १० अष्टादश ॥

**अट्ठे ट्ठस्य डो यालयालीसयोः ॥१।४।७२॥**

अट्ठशब्दस्य ट्ठस्य डः स्याद् याले यालीसे च परे । अड-यालं । अडयालीसं ॥

**एकस्योणे अउणः समुदितस्य ॥१।४।७३॥**

एकशब्दस्योनशब्देन समासे समुदितस्य अउण इत्यादेशो वा स्यात् । अउणवीसं, एगूणवीसं, एकूणवीसं । अउ-णत्तीसं । अउणपन्नं ॥

**आभीक्ष्ण्यवीप्सयोर्द्विः ॥२।३।४३॥**

आभीक्ष्ण्ये वीप्सायां च द्योत्ये नाम्नो द्वित्वं स्यात् । उदिओदिए ॥

**गच्छादीनां पूर्वस्य दीर्घो द्वितीयस्येर्बहुलम् ॥२।३।४४॥**

गच्छादीनां द्वित्वे पूर्वपदस्यान्त्यस्य दीर्घो द्वितीयपदस्ये-कारोऽन्तादेशश्च बहुलं स्तः । गच्छागच्छि । गुम्मागुम्मि । खंडाखंडि ॥

**दण्डादीनामतिशयेऽनुस्वारश्च ॥२।३।४५॥**

दण्डादिशब्दानामतिशये द्योत्ये द्वित्वे पूर्वस्यानुस्वारा-न्तागमश्च प्रायेण भवति । दंडंदण्डेण । वामंवामेण । जीवं-जीवेणं । थक्कंथक्कं । दवंदवं ॥

---

१ अष्टचत्वारिंशत् । २ एकोनविंशतिः । ३ एकोनत्रिंशत् । ४ एकोनपञ्चाशत् ५ उदितोदितः । ६ गच्छागच्छि । ७ गुल्मागुल्मि । ८ खण्डाखण्डि ॥ ९ दण्डदण्डेन । १० वामवामेन । ११ जीवजीवेन । १२ थक्कथक्कम् (स्थितस्थितम्) । १३ द्रुतंद्रुतम् ॥

## उरसुह-मज्झानां तृतीयार्थे च ॥२।३।४६॥

उर-सुह-मज्झशब्दानां तृतीयार्थे चकारादाभीक्ष्ण्यादौ च द्योत्ये द्वित्वं स्यात्। उरंउरेणं[1]। सुहंसुहेण[2]। मज्झंमज्झेण[3]॥

## मासस्य नैरन्तर्ये ॥२।३।४७॥

मासशब्दस्य नैरन्तर्ये द्योत्ये द्वित्वं स्यात्। मासंमासेणं[4]॥

## दवदवात्स्सः ॥२।३।४८॥

अस्मात्स्सो वा स्यात्। दवंदवस्स[5]। दवदवं॥

## दिसिपरयोरोत् ॥२।३।४९॥

अनयोर्द्विरुक्तौ आदेरोकारान्तादेशः स्यात्। दिसोदिसिं[6]। परोप्परं[7]॥

## अण्णस्य वा ।२।३।५०॥

आदेरण्णशब्दस्यौकारान्तादेशो वा स्याद्विरुक्तौ। अण्णोण्णं[8]। अन्नमन्नं॥

## कोडेरात् ॥२।३।५१॥

द्विरुक्तौ पूर्वस्य कोडिशब्दस्याकारान्तादेशः स्यात्। कोडाकोडी[9]॥

## जीवादयो ग्गाहादिभिर्गिण्हादीनामनुप्रयोगे ॥२।३।५२॥

द्वितीयान्ता जीवादिशब्दा ग्गाहादिप्रकृतिकैर्द्वितीयान्तैः

१ उरउरसा। २ सुखसुखेन। ३ मध्यमध्येन। ४ मासमासेन। ५ द्रुतद्रुतम्। ६ दिग्दिग्। ७ परस्परम्। ८ अन्योऽन्यम्। ९ कोटिकोटिः॥

सह समस्यन्ते गिण्हादिधातूनामनुप्रयोगे । "विजयं तक्करं[1]··· जीवग्गाहं गिण्हन्ति" जीवन्तं गृह्णन्तीत्यर्थः । "अन्तगमणं गमिस्सामि" नाया० १-१५ । अन्तं गमिष्यामीत्यर्थः ॥

॥ इति बहुव्रीहिसमासप्रकरणम् ॥

॥ इति समासप्रकरणम् ॥



# अथ तद्धितप्रकरणम् ॥

## तद्धिताः ॥२।४।१॥

वक्ष्यमाणाः प्रत्ययास्तद्धितसञ्ज्ञाः स्युः ॥

## अदणिकेकणिज्जेज्जणियेयणिमेल्लकमेत्ताः ॥२।४।२॥

अत् अण् इक इकण् इज्ज इज्जण् इय इयण् इम इल्ल क मेत्त, इत्येते प्रत्यया वक्ष्यमाणेष्वर्थेषु यथाप्रयोगं स्युः ॥

## ताद्धितेषु स्वराद्या डितः ॥२।४।३॥

तद्धितेषु स्वराद्याः प्रत्यया डिद्भवन्ति । बाहुलकात् तं-डुलेज्जं[2], तंडुलिज्जं । गंगेयो[3] । भाइणिज्जो[4], भाइणेज्जो ॥

## स्वार्थे प्रथमायाः ॥२।४।४॥

प्रथमान्तसमर्थान्नाम्नः स्वार्थे उक्तप्रत्ययाः स्युः । अच्चन्तियं[5] । जायमेत्तं[6], जायमित्तं । णियडिल्लया[7] । उत्तरिल्लं[8] । "तद्धिता-

१ विजयं तस्करं ··· जीवग्राहं गृह्णन्ति । नाया० २-३६ । २ तन्दुलीयम् । ३ गाङ्गेयः । ४ भागिनेयः । ५ आत्यन्तिकम् । ६ जातमात्रम् । ७ निकृतिमत्ता । ८ औत्तरेयं ॥

न्तादपि तद्धितान्तरम्" आणिल्लियं[1] । वा० (ल्लाच् चलौ वा वाच्यौ) छच्चं[2], ल्लं ॥

## महादालयल्ल-ल्लियाः ॥२।४।९॥

महशब्दात्स्वार्थे आलय-ल्ल-ल्लिय-प्रत्ययाः स्युः। महालओ[3], महल्लो, महल्लओ, महल्लगो, महल्लिओ ॥

## पोत्तादुल्लः ॥२।४।१०॥

पोत्तशब्दात्स्वार्थे उल्लप्रत्ययः स्यात् । पोत्तुल्लओ[4] ॥

## बद्धमुक्कयोरिल्ले ॥२।४।१२॥

अनयोरिल्लप्रत्यये टिलोपो न स्यात् । बद्धेल्लगो[5] । मुक्केल्लगो[6] ॥

## लोभादिभ्यस्त्ता ॥२।४।१३॥

प्रथमान्तसमर्थेभ्यो लोभादिभ्यः स्वार्थे त्ताप्रत्ययः स्यात् । गवेसणत्ता[7] ॥

## तयोर्यस्त्तः ॥२।४।१४॥

त्ताप्रत्ययस्य तकारयोर्यकारादेशो बहुलं स्यात् । लोभया[8] । सीलया[9] । लीणया[10] । अणुकंपणया[11] । गवेसणया । दुक्खणया[12] । लिंपणया[13] । पिट्टणया[14] ॥

---

१ आनीतकम् । २ षट्कम् । ३ महत्कः । ४ पौत्रकः । ५ बद्धकः । ६ मुक्तकः । ७ गवेषणिका । ८ लोभकः । ९ शीलकम् । १० लीनकम् । ११ अनुकम्पनकम् । १२ दुःखनकम् । १३ लिम्पनकम् । १४ पिट्टनकम् ॥

## मडस्येल्ले ॥२।४।११७॥

मडस्योपधाया लोपः स्यात् इल्लप्रत्यये । मईल्लिओ[1] ॥

## सव्वणामादावन्तिः परिमाणे च ॥२।४।१५॥

सव्वणामसञ्ज्ञकाच्छब्दात्परिमाणेऽर्थे आवन्तिप्रत्ययः स्याच्चकारात्स्वार्थेऽपि । एयावन्ति[2] ॥

## पढमादिल्लुः ॥२।४।१७॥

पढमशब्दात्स्वार्थे इल्लुप्रत्ययः स्यात् । पढमिल्लुए[3] ॥

## एकार्थकादागीणियेया असहाये ॥२।४।१६॥

एकार्थकात्प्रथमान्तसमर्थाद् आगि--इणिय--इय--प्रत्ययाः स्युरसहाये । एगागी[4], एगाणिए, एकाणिए । एक्किया[5] ॥

## निसीहेरुच्चारणे कः ॥२।४।१८॥

प्रथमान्तान्निसीहिशब्दादुच्चारणेऽर्थे कप्रत्ययः स्यात् । 'निसीहि'इत्युच्चारणम् । निसीहिगा[6], निसीहिया ॥

## एयः साऽस्मै दीयते साऽस्य देवता ॥२।४।१९॥

प्रथमान्तसमर्थात्साऽस्मै दीयते साऽस्य देवता इत्यनयोरर्थयोरेयः प्रत्ययः स्यात् । दक्खिणा इमस्स दिज्जइ त्ति दक्खिणेओ[7] । अग्गी देवया इमस्स त्ति अग्गेओ[8] ॥

---

१ मृतकः । २ एतावान् । ३ प्रथमकः । ४ एकाकी । ५ एकका । ६ निशीथिका, नैषेधिकी वा । ७ दाक्षिणः । ८ आग्नेयः ॥

## अल्पे च ॥२।४।५॥

प्रथमान्तसमर्थादल्पेऽर्थेऽप्युक्तप्रत्ययाः स्युः । अप्पो अंसो=अंसिया[1] । अल्पार्थकप्रत्ययान्ताः प्रायेण स्त्रियाम् ॥

## इतस्तदस्य संजातं पत्तादिभ्यः ॥२।४।२०॥

प्रथमान्तसमर्थेभ्यः पत्तादिभ्योऽस्य संजातमित्यर्थे इतप्रत्ययः स्यात् । पत्तं इमस्स संजातं=पत्तियं[2] । गब्भियं[3] ॥

## अतिशये तरः ॥२।४।२१॥

प्रथमान्तसमर्थादतिशयेऽर्थे तरप्रत्ययः स्यात् । अइसएण तुच्छं=तुच्छतरं ॥

## तरस्य के ॥१।३।५६॥

तरप्रत्ययस्य दीर्घोऽन्तादेशः स्यात्कप्रत्यये परे । बहुतराए[4] । अप्पतराए[5] ॥

## इट्ठो धम्म्यादिभ्यः ॥२।४।२३॥

धम्म्यादिशब्देभ्योऽतिशयेऽर्थे इट्ठप्रत्ययः स्यात् । अइसएण धम्मी=धम्मिट्ठो[6] । अहम्मिट्ठो[7] ॥

## इज्ज स्थेरादिभ्यः ॥२।४।२४॥

थेरादिभ्योऽतिशयेऽर्थे इज्जप्रत्ययः स्यात् ॥

## थेरधीरपियानामिज्जे थधपाः ॥१।४।७४॥

एषामिज्जे परे थ ध प इत्येते आदेशाः क्रमेण स्युः । थेज्जं[8] । धेज्जं[9] । पेज्जं[10] ॥

---

१ अंशिका । २ पत्रितम् । ३ गर्भितम् । ४ बहुतरकः । ५ अल्पतरकः ।
६ धार्मिष्ठः । ७ अर्वम्मिष्ठः । ८ स्थैर्यम् । ९ धैर्यम् । १० प्रियतरम् ॥

## तदर्हति करोति ॥२।४।२५॥

द्वितीयान्तसमर्थादर्हति करोतीत्यनयोरर्थयोरियादिप्रत्ययाः स्युः। अभिसेकमर्हति=अभिसिक्को[1]। उवसादित्वाद्धिः। अलंकारं करेइ त्ति=अलंकारिए[2]॥

## णित्यादिस्वरस्य वृद्धिः ॥१।३।२४॥

णित्प्रत्यये आदिस्वरस्य वृद्धिः स्यात्। आलंकारिए[3]। आभियोगिए[4] आभिग्गहिए[5]॥

## अत्पसिणस्येये ॥१।३।६०॥

पसिणशब्दस्येकारस्याकारः स्यादियप्रत्यये। पसिणं करेइ त्ति=पासणिए[6]॥

## तेन निर्वृत्तं क्रीतं चरति व्यवहरति जीवति गृह्यते॥ ॥२।४।२६॥

तृतीयान्तसमर्थान्नाम्न एष्वर्थेषूक्तप्रत्ययाः स्युः। अब्भोवगमेन निव्वत्ता=अब्भोवगमिया[7]। अहिगरणिया[8]। दण्डेणं निव्वत्तं=दण्डिमं[9]। सएण कीयं=सतियं[10], सइयं॥

## इये णायस्य णेया ॥१।४।७५॥

णायशब्दस्य णेयादेशः स्यादिये परे॥

## उदियस्य वा ॥१।४।७६॥

णायशब्दसम्बन्धिन इयप्रत्ययस्यादेरुकारो वा स्यात्। णाएणं ववहरति=णेयाउओ[11], णेयाइयो। तेल्लेणं जीवइ=तेल्लिओ[12]॥

---

१ आभिषिक्यः। २ अलङ्कार्यः। ३ आलङ्कारिकः। ४ आभियोगिकः। ५ आभिग्रहिकः। ६ प्राश्निकः। ७ आभ्युपगमिकी। ८ आधिकरणिकी। ९ दण्डिमम्। १० शतिकम्। ११ नैयायिकः। १२ तैलिकः॥

## णित्यहारयणादीनामुत्तरस्यादेर्वृद्धिः ॥२।४।२७॥

अहारयणादिशब्दानामुत्तरपदस्यादेर्वृद्धिः स्याण्णिति परे । अहारयणं ववहरइ=अहारायणियं । तेयाहियं, तेआ-हियं ॥

## चक्खोरस्य सट् ॥४।४।८॥

चक्खुशब्दात्परस्याऽप्रत्ययस्य सडागमः स्यात् । चक्खुणा गिण्हिज्जइ=चक्खुसं[3] ॥

## अदणौ नक्षत्रेण युक्तः कालः ॥२।४।२६॥

नक्षत्रवाचकेभ्योऽस्सिणयादिशब्देभ्यस्तृतीयान्तेभ्यो युक्तः काल इत्यर्थे अद्-अण्-प्रत्ययौ स्तः ॥

## अस्सिणया इणस्यौसाणि ॥१।४।७७॥

अस्सिणीसंबन्धिन इणस्योसादेशः स्यादणि परे । अस्सिणीए जुत्ता पुण्णमासी=आसोई, अस्सोई । आसाढी । कत्तिया । जेट्ठामूला । फग्गुणी । विसाही[9] ॥

## मिगासिरस्यादेराति ॥१।३।६१॥

अस्य पूर्वेकारस्याकारः स्यादप्रत्यये । मग्गसिरा । साविट्ठी । पोट्ठवती[12] । पोसी[13] । माही[14] । चेत्ती[15] ।

---

१ यथारात्निकम् । २ तैजोहितम् । ३ चाक्षुषम् । ४ आश्विनी । ५ आषाढी । ६ कार्त्तिकी । ७ ज्येष्ठामूली । ८ फाल्गुनी । ९ वैशाखी । १० मार्गशीर्षा । ११ श्राविष्ठा । १२ प्रोष्ठपदी । १३ पौषी १४ माघी । १५ चैत्री ।

## साऽस्मिन् पौर्णमासीति सञ्ज्ञायाम् ॥२।४।३०॥

अस्मिन्नर्थेऽणप्रत्ययः स्यात्सञ्ज्ञायाम् । आसोई पुण्ण-मासी अस्सिं मासंमि=आसोओ मासो ॥[1]

## वाताद्तेनोपहतमीनः ॥२।४।३१॥

तृतीयान्तवातशब्दादुपहतमित्यर्थे ईनप्रत्ययः स्यात् । वातेणं उवहयं=वातीणं, वाईणं ॥[2]

## तत आगतः ॥२।४।६॥

पञ्चम्यन्तसमर्थादागत इत्यर्थे उक्तप्रत्ययाः स्युः । पसंगाओ आगयं=पासंगियं[3] । पारितोसियं[4] ॥

## तस्येदमपत्यं समूहो वृत्तिर्व्यापारः ॥२।४।७॥

षष्ठ्यन्तसमर्थादिदं अ[illegible] [illegible] [illegible] व्यापारः इत्येतेष्वर्थेषूक्तप्रत्ययाः स्युः । का[illegible] [illegible] [illegible]त्तियं । उत्तरस्स इमं=उत्तरिज्जं । कोसेज्जं । वेस[illegible] [illegible]व[illegible]लिओ । "वेसालियसावक" । मगहाणं [illegible]=मा[illegible] । कवोयस्स वित्ती=कावो[illegible] [illegible]गो वक्कर्मा[illegible] सावतेयं, सावतेज्जं, सापतेयं, [illegible]

1 आश्विनो मासः । 2 वातीनम् ( वातोपहतम् ) ॥ 3 प्रासङ्गिकम् । 4 पारितोषिकम् । 5 कार्ति[illegible] । 6 औत्तरेयम् । 7 कौशेयम् । 8 वैशा[illegible] । [illegible] [illegible]तकम् । 10 कापोती । 11 स्वापतेयम् ।

अदणोरुतोऽव् ॥१।३।६२॥

उकारस्यावादेशः स्यादप्रत्ययाणप्रत्यययोः । पाण्डवा । पण्डवा । पौरवो[1] । लाघवं । अज्जवं[2] । मद्दवं[3] ॥

चउछाभ्यां कस्य द्विः ॥२।४।३२॥

चउछशब्दाभ्यां परस्य कप्रत्ययस्य द्वित्वं स्यात् । चउक्कं[4] । छक्कं[5] ॥

चोरवणिजाभ्यामिज्जस्यादेः ॥४।४।७१॥

आभ्यां परस्येज्जप्रत्ययस्यादेर्लोपः स्यात् । चोरस्स वावारो=चोज्जं[6], चोरियं । वणियस्स वावारो=वाणिज्जं[7] ॥

अप्पणादिच्चियेज्जियौ ॥२।४।३३॥

अप्पणशब्दात्षष्ठ्यन्तात्संबन्धिन्यर्थे इच्चियेज्जियौ भवतः । अप्पणस्स इमं=अप्पणिच्चियं[8], अप्पणिज्जियं ॥

वातादोलः ॥२।४।३४॥

षष्ठ्यन्ताद्वातशब्दात्समूहेऽर्थे ओलप्रत्ययः स्यात् । वातोली ॥

उपधादीनामणि द्विः ॥१।४।११८॥

एषामुपधाया द्वित्वं स्यादणि परे । पयातीणं समूहो=पायत्तं[9] ॥

---

१ पौरवः । २ आर्जवम् । ३ मार्दवम् । ४ चतुष्कम् । ५ षट्कम् । ६ चौर्यम् । ७ वाणिज्यम् । ८ आत्मीयम् । ९ पादातम् ॥

अजिनस्येतोऽणि ॥१।३।६३॥

अजिनशब्दस्येकारस्य दीर्घः स्यादणि। आई[1],आजीनं।

पडिहार्या आत एः ॥१।३।६४॥

पडिहारीशब्दस्याकारस्यैकारः स्यादणि परे। पडिहारीए इमं=पाडिहेरं[2] ॥

पयडेर्यः ॥१।४।११९॥

पयडिशब्दस्योपधाया यकारः स्यादणि परे। पाययं[3] ॥

पयावत्यादीनां टेरलोपोऽणि ॥२।४।११॥

पयावतिप्रभृतिशब्दानां टेर्लोपो न स्यादणि। पायावच्चं[4]। सेणावच्चं[5]॥

ममस्येदिययोः ॥१।३।६५॥

ममशब्दस्य दीर्घोऽन्तादेशः स्यादि-इय-प्रत्यययोः। ममाई[6], ममाईए[7] ॥

इये सिलेसस्य सेसः ॥१।४।७८॥

सिलेसस्य सेसादेशः स्यादियप्रत्यये। संसेसियं[8] ॥

विरोयणादीनामइः पूर्वस्य ॥२।४।२८॥

विरोयणादिशब्दानां णिति परे आदिस्वरस्य अइ इत्यादेशो वा स्यात् ॥

१ आजिनम्। २ प्रातिहार्यम्। ३ प्राकृतम्। ४ प्राजापत्यम्। ५ सैनापत्यम्। ६ ममत्वी,। ७ममायितः, मामकः। ८ सांश्लेषिकम् ॥

वइरोयणं[1], वेरोयणं । वइसदेवो[2], वेसदेवो । वइसेसिए[3], वेसेसिए । वइसाहो[4], वेसाहो । जइणो[5], जेणो । वइचित्तं[6], वेचित्तं । वइधम्मं[7], वेधम्मं । कइलासो[8], केलासो ॥

### परात्कीयः ॥२।४।३५॥

षष्ठ्यन्तात्परशब्दात्सम्बन्धिन्यर्थे कीयप्रत्ययः स्यात् । परक्कीअं ॥

### रायाण्ण्णो यस्येत् ॥२।४।३६॥

रायशब्दात्सम्बन्धिन्यर्थे ण्णप्रत्ययः स्याद्यस्येकारो वा स्यात् । राइण्णं[9], रायण्णं ॥

### कम्माण्णकौ ॥२।४।३७॥

कम्मशब्दात्सम्बन्धिन्यर्थे णकप्रत्ययौ स्तः । कम्मणं[10], कम्मअं ॥

### तत्रभवोऽधिकृतः ॥२।४।३८॥

सप्तम्यन्तसमर्थादनयोरर्थयोरुक्तप्रत्ययाः स्युः । अब्भंतरे भवो=अब्भंतरिए[11], अब्भंतरगो । अवरिल्लं[12] । पुरत्था भवं =पुरच्छिमं[13], पुरत्थिमं । पच्छिमं[14] । अन्तिमं । उवरिल्लं[15], उवरिमं । भण्डारे अहिगडो=भण्डारिए[16] ॥

१ वैरोचनम् । २ वैश्वदेवः । ३ वैशेषिकः । ४ वैशाखः । ५ जैनः । ६ वैचित्र्यम् । ७ वैधर्म्यम् । ८ कैलाशः । ९ राजन्यम् । १० कार्म्मणम् । ११ आभ्यन्तरकः । १२ आपरम् । १३ पौरस्त्यम् । १४ पाश्चात्यम् । १५ उपरितनं । १६ भाण्डारिकः ॥

## उदीई-पडीईभ्यां णड् ॥२।४।३८॥

आभ्यां भवार्थे णड्प्रत्ययः स्यात्। उदीणं[1], उईणं। पडीणं[2]। वा० (दीवादिभ्यो भवाद्यर्थे इच्चस्योपसंख्यानम्) दीविच्चं[3] ॥

## पाईतो णो दट् चेतः ॥२।४।३९॥

पाईशब्दाद्भवार्थे णप्रत्ययः स्यादोकारस्य दडागमो वा स्यात्। पादीणं[4], पाईणं ॥

## अति पच्छिमस्य पच्चच्छिमपच्चत्थिमौ ॥१।४।७९॥

पच्छिमशब्दस्य पच्चच्छिम-पच्चत्थिमावादेशौ पर्यायेण भवतोऽप्रत्यये। पच्चच्छिमं[5],पच्चत्थिमं ॥

## पहादिभ्यस्तत्र साधुरेज्जण् ॥२।४।४०॥

पहादिभ्यः सप्तम्यन्तेभ्यः साधुरित्यर्थे एज्जण्प्रत्ययः स्यात्। पहे साहू=पाहेज्जं[6] ॥

## पासादिल्लस्तत्र शेते ॥२।४।४१॥

सप्तम्यन्तात्पासशब्दाच्छेते इत्यर्थे इल्लप्रत्ययः स्यात्। पासिल्लओ[7] ॥

## उत्तरपदादहेरदीणो ॥२।४।४२॥

उत्तरपदभूतादहेरुपसर्गादप्रत्ययेणप्रत्ययौ भवतः। परज्झो[8], पराहीणो ॥

१ उदीचीनम्। २ प्रतीचीनम्। ३ द्वैप्यम्। ४ प्राचीनम्॥ ५ पश्चिमम्। ६ पाथेयः। ७ पार्श्विकः। ८ पराधीनः॥

### बहेर्मगूरकावणि ॥४।४।६॥

बहिशब्दस्याणिपरे मगूरकावागमौ पर्यायेण भवतः। बाहिमं, बाहिरं ॥[1]

### मज्झान्मश्च ॥२।४।४३॥

मज्झशब्दादुक्तेऽर्थे मप्रत्ययश्चकारादुक्तप्रत्ययाश्च स्युः। मज्झमं, मज्झिमं, मज्झिल्लं ॥[2]

### इदिणमन्ताश्च तदस्त्यस्यास्मिन् ॥२।४।४४॥

प्रथमान्तसमर्थादस्यास्तीत्यर्थे अस्मिन्नस्तीत्यर्थे च इद्-इण्-मन्त-प्रत्ययाश्चकारादुक्तप्रत्ययाश्च यथाप्रयोगं स्युः। अगारं अत्थि जस्स सो=अगारी। कोडुम्बी[3] ॥

### आन्मन्तस्य वः ॥१।४।८१॥

अकारात्परस्य मन्तप्रत्ययस्यादेर्वकारः स्यात्। वण्णवं[4], वण्णवन्तो। भगवं[5], भगवन्तो। आत्तिकम्, वोइमन्तो[6]। जातिमन्तो[7]। तिसूलो इमस्स अत्थि=तिसूलिओ[8]। गंठी अत्थि अस्सि=गंठिल्लो[9]। माया अत्थि इमस्स=माइल्लो[10]। कलुणा अत्थि इमस्स=कलुणो[11] ॥

### आउसाद् न्तः ॥२।४।४५॥

आउसशब्दादुक्तेऽर्थे न्तप्रत्ययो वा स्यात्। आउसो[12], आउसन्तो। वा० (गोर्मिर्वक्तव्यः) गोमी, गोमिणी[13] ॥

१ बाह्यम्। २ मध्यमम्। ३ कुटुम्बी। ४ वर्णवान्। ५ भगवान्। ६ वीचिमान्। ७ जातिमान्। ८ त्रिशूलिकः। ९ ग्रन्थिमान्। १० मायावी। ११ करुण०। १२ आयुष्मान्। १३ गोमान ॥

छवेरिये दीर्घः ॥१।३।५०॥

छविशब्दस्य दीर्घोऽन्तादेशः स्यादियप्रत्यये परे। छवीइए[1]॥

जसादिभ्यो वा ॥१।४।८२॥

जसादिशब्देभ्यः परस्य मन्तप्रत्ययस्यादेर्वकारो वा स्यात्। जसवन्तो[2], जसमन्तो, जसोमन्तो। आयारवन्तो[3], आयारमन्तो॥

णातेश्च ॥१।४।८३॥

णातिशब्दात्परस्य मन्तस्यादेर्वकारः स्यात्। णातिवन्तो[4], णाइवं॥

इति सड्ढाया ह्रस्वः ॥१।३।६६॥

सड्ढाशब्दस्य ह्रस्वोऽन्तादेशो वा स्यादिप्रत्यये। सड्ढई[5]। पक्षे टिलोपे-सड्ढी॥

वससस्य वुसिर्मन्ते ॥१।४।८४॥

वससशब्दस्य वुसि इत्यादेशः स्यान्मन्ते परे। वुसिमन्तो[6]॥

जयादिभ्य इणः ॥२।४।४६॥

एभ्य उक्तेऽर्थे इणप्रत्ययः स्यात्। जइणो[7]। दोसिणो[8]। बरहिणो[9]॥

किमेर्णः ॥२।४।४७॥

उक्तेऽर्थे किमिशब्दाण्णप्रत्ययः स्यात्। किमिणो[10]॥

---

१ छविमान्। २ यशस्वान्। ३ आचारवान्। ४ ज्ञातिमान्। ५ श्रद्धावान्। ६ वशी। ७ जयी। ८ दोषी। ९ बर्ही। १० कृमिमान्॥

पङ्कादीनां सञ्ज्ञायां दीर्घः ॥१।४।८५॥

पङ्कादिशब्दानां दीर्घोऽन्तादेशः स्यान्मन्तप्रत्यये सञ्ज्ञायाम्। पङ्कावती ॥

इलो गन्धादिभ्यः ॥२।४।४८॥

उक्तेऽर्थे गन्धादिभ्य इलप्रत्ययः स्यात्। गन्धिलो[1]। तुन्दिलो[2] ॥

जडाया जड्डुलजडियालौ ॥२।४।४९॥

उक्तेऽर्थे जडाशब्दस्य जड्डुल जडियाल इत्येतौ वा निपात्येते। जड्डुलो[3], जडियालो, जडिलो ॥

रयात्स्सलः ॥२।४।५०॥

उक्तेऽर्थे रयशब्दात्स्सलप्रत्ययो वा स्यात्। रयस्सला[4], रइला ॥

पम्हादिभ्यो लः ॥२।४।५१॥

उक्तेऽर्थे पम्हादिशब्देभ्यो लप्रत्ययः स्यात्। पम्हलो[5]। पत्तलो[6]। तणुलो[7] ॥

आलुर्दयादिभ्यः ॥२।४।५२॥

उक्तेऽर्थे दयादिशब्देभ्य आलुप्रत्ययः स्यात्। दयालू[8]। वीसरणालू[9] ॥

---

१ गन्धिलः। २ तुन्दिलः। ३ जटिलः। ४ रजस्वला। ५ पक्ष्मलः। ६ पत्रलः। ७ तनुलः। ८ दयालुः। ९ विशरणालुः ॥

### उर्लज्जायाः ॥२।४।५३॥

उक्तेऽर्थे लज्जाशब्दादुप्रत्ययः स्यात् । लज्जू[1] ॥

### जसादिभ्योंऽसिस्सी ॥२।४।५४॥

उक्तेऽर्थे जसादिशब्देभ्योंऽसिस्सीप्रत्ययौ पर्यायेण भवतः॥ जंसंसी[2], जसस्सी । तेयंसी[3], तेयस्सी । वचंसी[4], वच्चस्सी । ओयंसी[5], ओयस्सी ॥

### त्तत्तणौ तस्य भावः ॥२।४।५५॥

षष्ठ्यन्तसमर्थाद्भाव इत्यर्थे त्त-त्तण-प्रत्ययौ स्तः । अपरत्तं[6] । उस्सुगत्तं[7] । अंबत्तणं[8] । तीयत्तणं[9] । पहुत्तणं[10] । अंधत्तणं[11] ॥

### अरिप्रभृतिभ्यस्त्ता ॥२।४।५६॥

एभ्यस्त्ताप्रत्ययः स्याद्भावेऽर्थे । अरित्ता[12] । उप्पलकंदत्ता[13] ॥

### जहातहाददियणौ ॥२।४।५७॥

अस्माद्भावे अद्-इयणप्रत्ययौ भवतः ॥

### तस्येयणि द्विः ॥२।४।५८॥

जहातहशब्दस्य तकारस्य द्वित्वं वा स्यादियणि परे । आहत्तहियं[14], आहातहियं । जहातहं[15], अहातहं ॥

---

१ लज्जालुः । २ यशस्वी । ३ तेजस्वी । ४ वर्चस्वी । ५ ओजस्वी । ६ अपरत्वम् । ७ उत्सुकत्वम् । ८ आम्रत्वम् । ९ तृतीयत्वम् । १० प्रभुत्वम् । ११ अन्धत्वम् । १२ अरिता । १३ उत्पलकन्दता । १४ याथातथिकम् । १५ यथातथम् ॥

## इणो जडादिभ्यः ॥२।४।६०॥

जडादिशब्देभ्यो भावे इणप्रत्ययः स्यात्। जडिणो[1]। णिग्गिणो, णगिणो[2]। अग्गि,भग्गं[3]। मुण्डिणो[4]। संघाडिणो[5]।

## इय इस्सरादिभ्यः ॥२।४।६१॥

इस्सरादिशब्देभ्यो भावे इयप्रत्ययः स्यात्। ईस्सरियं[6]। अज्जवियं[7]। सामग्गियं[8]॥

## अप्पाद्बहोः कः ॥२।४।६२॥

अप्पपूर्वकाद्बहुशब्दाद्भावे कप्रत्ययश्च स्यात्। अप्पाबहुकं[9], अप्पाबहुगं, अप्पाबहुयं, अप्पाबहुत्तं॥

## उवमादिभ्योऽण् ॥२।४।६३॥

एभ्यो भावेऽण्प्रत्ययः स्यात्। ओवम्मं[10]। आहिक्कं[11]। दोहग्गं[12]। सोहग्गं,सोभग्गं[13]। स्वार्थेऽण्यप्यस्य प्रवृत्तेः, तेलुक्कं[14], तेलोक्कं॥

## जुवाणस्यातो वस्य द्विर्वा ॥१।३।६७॥

जुवाणशब्दस्याकारस्य ह्रस्वो वकारस्य द्वित्वं वा स्यादणि परे। जुव्वणं[15], जोव्वणं, जोवणं, जोवणगं॥

---

१ जडत्वम्। २ नग्नत्वम्। ३ नाग्न्यम्। ४ मुण्डत्वम्। ५ संघाटत्वम्। ६ ऐश्वर्यम्। ७ आर्जवम्। ८ सामग्र्यम्। ९ अल्पबहुत्वम्। १० औपम्यम्। ११ आधिक्यम्। १२ दौर्भाग्यम्। १३ सौभाग्यम्। १४ त्रैलोक्यम्। १५ यौवनम्॥

दूयादीनां च्चः ॥१।४।१२०॥

एषामुपधायाश्च्चकारादेशः स्यादणि परे। दोच्चं[1]। अहा-तच्चं[2]। वेयावच्चं[3]॥

वियावडादियण् च ॥२।४।६४॥

अस्माद्भावे इयण्प्रत्ययः स्याच्चादण्। वेयावडियं[4]॥

थेर-धीर-सहायानामेरेरायानामेज्जः ॥१।४।८६॥

एषामेरस्येरस्यायस्य च एज्जादेशः स्यादणि परे। थेरस्स भावो=थेज्जं[5], थिज्जं। धेज्जं[6], धिज्जं। सहेज्जं[7], सहिज्जं॥

कलुणस्यौत् ॥१।३।६९॥

कलुणशब्दस्यादिस्वरस्यौकारादेशः स्यादणि परे। कलु-णस्स भावो कोलुणं[8]॥

एदहिपुरयोर्वच्चे ॥१।३।६८॥

अहिपुरशब्दयोरेकारोऽन्तादेशः स्याद्वच्चशब्दे परे। आहे-वच्चं[9]। पोरवच्चं[10]॥

सफले फस्य हः ॥१।४।८७॥

सफलशब्दे फकारस्य हकारो वा स्यादणि। सोहल्लं[11], साफल्लं॥

१ दौत्यम्। २ याथातथ्यम्। ३ वैयावृत्त्यम्। ४ वैयावृत्तिकम्। ५ स्थैर्यम्। ६ धैर्यम्। ७ साहाय्यम्। ८ कारुण्यम्। ९ आधिपत्यम्। १० पौरपत्यम्। ११ साफल्यम्॥

## सुकुमारस्य सुगमलः ॥१।४।८८॥

अस्याणि परे सुगमल इत्यादेशः स्यात् । सोगमल्लं[1] ॥

## विकारप्रधानयोरण्मयौ ॥२।४।६५॥

षष्ठ्यन्तसमर्थाद्विकारे प्रधाने चार्थेऽण्-मयप्रत्ययौ स्तः । अयोमयं । फालिहमयं[2] । वओमयं[3] । वईमयं[4] ॥

## अङ्गादीनां मये ॥१।३।७०॥

अङ्गादिशब्दानां दीर्घोऽन्तादेशः स्यान्मये परे । अंगाम-[5]यं । बाहुलकात्-रययामयं[6], रययमयं ॥

## भिओउच्चः शिष्ये ॥२।४।६६॥

षष्ठ्यन्ताद्भिउशब्दाच्च प्रत्ययः स्याच्छिष्येऽर्थे । भिउंणो सिस्सो भिउच्चो[7] ॥

## ईरत्तादिभ्योऽभूततद्भावे करभवयोर्योगे ॥२।४।६७॥

अत्तादिशब्देभ्यो द्वितीयान्तेभ्योऽतथाभूतस्य तथात्व-सम्बन्धेऽर्थे करभवधातुयोगे ईप्रत्ययः स्यात् । अत्तीकरेइ[8] । ईसरीकरो[9] । एगीभूए[10] । दरिद्दीहूय[11] ॥

## मोल्यादिभ्य ईतो लोपः ॥२।४।६८॥

मोल्यादिशब्देभ्यः परस्येप्रत्ययस्य लोपः स्यात् । मोलि-[12]कडो ॥

१ सौकुमार्यम् । २ स्फटिकमयम् । ३ वचोमयम् । ४ वाङ्मयम् । ५ अङ्गमयम् । ६ रजतमयम् । ७ भृगोः शिष्यो भार्गवः । ८ आत्मीकरोति । ९ ईश्वरीकृतः । १० एकीभूतः । ११ दरिद्रीभूय । १२ मौलीकृतः ॥

इंगालादिभ्यो भवस्यादेर्द्विः ॥१।४।८९॥

इंगालादिशब्देभ्यः परस्य भवधातोरादेर्द्वित्वं स्यात् । इंगालब्भूया[1] । छारियब्भूया[2] । तत्तकवेल्लकब्भूया[3] ।

मणादिभ्य ईतोऽसुट् ॥४।४।१०॥

मणादिभ्यः परस्येकारस्यासुडागमः स्यात् । मणसीकरेइ[4] ॥

अम्हादिषु दिसादः ॥२।४।६६॥

अम्हादिशब्देषूपपदेषु दिसधातोरप्रत्ययः स्यात् ॥

दिसे पूर्वस्याति ॥१।३।७१॥

अप्रत्ययान्तदिसधातौ परे पूर्वस्य दीर्घोऽन्तादेशः स्यात् ॥

दिसस्य रलावाति ॥१।४।९०॥

अप्रत्यये दिसधातोरादेर्दकारस्य रेफलकारौ पर्यायेण भवतः । अम्हारिसो[5] । तुम्हारिसो[6] । जारिसो[7] ॥

ईत्तादितः ॥१।४।९१॥

तशब्दात्परस्य दिसस्येकारस्य दीर्घो वा स्यात् । तालिसो, तालीसो, तारिसो[8] ॥

ईच्च कस्य ॥१।३।७३॥

कशब्दस्येकारश्चकारादेकारोऽन्तादेशः स्याद्दिसे परे ॥

---

१ अङ्गारभूता । २ क्षारिकभूता । ३ ततकवेल्लुकभूता । (भग० ३-१) ।
४ मनसीकरोति । ५ अस्मादृशः । ६ युष्मादृशः । ७ यादृशः । ८ तादृशः ॥

काद्देः ॥१।३।७८॥

कशब्दात्परस्य दिसधातोर्देर्लोपो वा स्यात् । केरिसो, कीरिसो, कीसो, केसो, केसी ॥

एदिमस्य ॥१।३।७२॥

अप्रत्ययान्तदिसधातौ परे इमशब्दस्यैकारोऽन्तादेशः स्यात् ॥

इमो लोपो वा त्तो-हुणा-दिसेषु ॥१।३।७७॥

इमशब्दस्येमो लोपो वा स्यात् त्तो-हुणाप्रत्यययोर्दिसधातौ च परे । इमेरिसो, एरिसो, एलिसो ॥

इमारसस्य क्खः ॥१।३।७५॥

इमशब्दात्परस्य दिसधातोः सस्य क्खो वा स्यात् । एलिक्खो ॥

इदेतस्य ॥१।३।७४॥

एतशब्दस्यादेरिकारो वा स्याद्दिसे परे । इयारिसो, एयारिसो ॥

समानाच्छः ॥१।३।७६॥

समानशब्दात्परस्य दिसधातोः सस्य च्छ इत्यादेशो वा स्यात् । सरिच्छो, सरिसो, सलिसो ॥

१ कीदृशः । २ ईदृशः । ३ ईदृक्षः । ४ एतादृशः । ५ सदृक्षः ॥

## एतादारूवः सदृशे ॥२।४।७०॥

एतशब्दात्सदृशेऽर्थे आरूवप्रत्ययः स्यात्। एयारूवे। इमेयारूवे, अयमेयारूवे ॥

## संख्यायां तिः कजतेभ्यः ॥२।४।७१॥

एभ्यः संख्यायामर्थे तिप्रत्ययः स्यात्। का संख्या जेसिं= कति, कइ। जति, जइ। तति, तइ॥ "[3]जस्स जइ इंदियाइं तस्स तइ भणियव्वाइं"॥

## एतजतेभ्यः परिमाणे मन्तावतियतियात्तिल्लाः॥२।४।७२॥

एभ्यः परिमाणार्थे मन्त-आवतिय-तिय-तिल्लप्रत्ययाः स्युः। [4]एतावं, एयावं। एतावन्तो, [5]एयावन्तो। जावं, जावन्तो। [6]तावं, तावन्तो॥

## जादावन्ती च ॥२।४।७३॥

जशब्दात्परिमाणेऽर्थे आवन्तीप्रत्ययश्च स्यात्। [7]जावन्ती॥

## आवतियस्यातश्च ॥४।४।७३॥

एतसम्बन्धिन आवतियस्याकारस्य चकारादेतस्य तस्य लोपः स्यात्। [8]एवइए, एवतिए। [9]जावइए, जावतिए। तावइए, तावतिए॥

१ एतद्रूपः। २ इदमेतद्रूपः। ३यस्य यति इन्द्रियाणि तस्य तानि भणितव्यानि। (भग० ८-१०)। ४ एतावान्। ५ यावान्। ६ तावान्। ७ यावान्। ८ एतावतिकः। ९ यावतिकः। १० तावतिकः॥

तियस्य वा ॥१।४।६२॥

तियप्रत्ययस्यादेर्द्वित्वं वा स्यात् ॥

एतस्य तियत्तिलयोरतः ॥४।४।७२॥

एतस्याकारस्य लोपः स्यात्तिय-त्तिलप्रत्यययोः । इत्तिए,[1] एत्तिए । जत्तिए,[2] जतिए । तत्तिए,[3] ततिए । एत्तिलो[1] । जत्तिलो[2] । तत्तिलो[3] ॥

कादेवतियः ॥२।४।७४॥

कशब्दात्प्रथमान्तात्परिमाणेऽर्थे एवतियप्रत्ययः स्यात् । केवतिए,[4] केवइए ॥

अनवधारणे एयावन्ती ॥२।४।७५॥

कशब्दादनवधारणेऽर्थे एयावन्तीप्रत्ययः स्यात् । केयावन्ती ॥

पूरणे मः ॥२।४।७६॥

संख्यावाचकेभ्यः षष्ठ्यन्तेभ्यः पूरणेऽर्थे मप्रत्ययः स्यात् सत्तमं[5] । अट्ठमं[6] । नवमं । अट्ठारसमं[7] । वीसइमं[8] ॥

दुतिभ्यां डीयातियातिय॒णः ॥२।४।७७॥

आभ्यां पूरणेऽर्थे डीय-तिय-तीय-चणप्रत्ययाः स्युः ॥

दोर्बिर्डीय-तिय-तीयेषु ॥१।४।६३॥

दुशब्दस्य बि इत्यादेशः स्याड्डीय-तिय-तीयप्रत्ययेषु परेषु । बिइयं,[9] बीयं, बितीयं ॥

---

१ इयान्, एतावान् । २ यावान् । ३ तावान् । ४ कियान् । ५ सप्तमम् । ६ अष्टमम् । ७ अष्टादशम् । ८ विंशतितमम् । ९ द्वितीयम ॥

### तीयस्य ज्जः ॥१।४।१२१॥

द्वशब्दात्परस्य तीयप्रत्ययस्योपधाया ज्ज इत्यादेशः स्याद्वा। बितिज्जं, दोच्चं[1] ॥

### तेरइच्चणि च ॥१।४।६४॥

तिशब्दस्याकारान्तादेशः स्याट्टीय-तिय-तीय-चणप्रत्ययेषु। तीयं[2], तइयं, तत्तीयं, तच्चं ॥

### छइछात् ॥२।४।७८॥

छशब्दात्पूरणेऽर्थे ट्ठप्रत्ययः स्यात्। छट्ठं[3] ॥

### त्थश्च तोः॥२।४।७९॥

चतुशब्दात्पूरणेऽर्थे त्थप्रत्ययः स्यात्। चतुत्थं[4], चउत्थं॥

### संखेज्जात्तिः ॥२।४।८०॥

संखेज्जशब्दात्पूरणेऽर्थे तिप्रत्ययः स्यात्। संखेज्जई[5] ॥

### कादिभ्यो निर्द्धारणे ॥२।४।२२॥

कादिशब्देभ्यो निर्द्धारणेऽर्थे तरप्रत्ययः स्यात्। कयरो[6]। एगयरो[7]। इयरो[8]। अन्नयरो[9] ॥

### आभीक्ष्ण्ये बह्वादिभ्यः सोः ॥२।४।८१॥

आभीक्ष्ण्येऽर्थे बह्वादिभ्यः सोप्रत्ययः स्यात्। बहुसो[10]। कामसो[11]। पगामसो[12]। एगन्तसो[13] ॥

### कुम्भकादिभ्यः परिमाणे ॥२।४।८२॥

कुम्भकादिशब्देभ्यः परिमाणेऽर्थे सोप्रत्ययः स्यात्। कुंभगसो[14] ॥

---

१ द्वितीयम्। २ तृतीयम्। ३ षष्ठम्। ४ चतुर्थम्। ५ संख्येयतमः। ६ कतरः। ७ एकतरः। ८ इतरः। ९ अन्यतरः। १० बहुशः। ११ कामशः। १२ प्रकामशः। १३ एकान्तशः। १४ कुम्भकशः ॥

एक्कासि: ॥२।४।८३॥

आभीक्ष्ण्येऽर्थे एक्कशब्दात्सिप्रत्ययश्च स्यात् । [1]एक्कसि ॥

पञ्चमीसप्तमीभ्यां तो: ॥२।४।८४॥

पञ्चम्यन्तात्सप्तम्यन्ताच्च समर्थात्तोप्रत्यय: स्यात् । [2]एग-यओ, एगयतो।[3]दव्वओ,दव्वतो । पिट्ठओ,पिट्ठतो । [5]कम्मओ, कम्मतो । [6]अत्थओ, अत्थतो । [7]धम्मओ,धम्मतो ॥

तवि दुहो ह्रस्व: ॥१।३।८०॥

हाप्रत्ययान्तदुशब्दस्य ह्रस्वोऽन्तादेश: स्यात्तोप्रत्यये परे । [8]दुहओ ॥

अभ्यावृत्तौ संख्यार्थेभ्य: क्खुत्तो: ॥२।४।८५॥

संख्यावाचकेभ्यो वारंवारमित्यर्थे क्खुत्तोप्रत्यय: स्यात्। [9]दुक्खुत्तो । [10]तिक्खुत्तो । [11]सहस्सक्खुत्तो ॥

अगंतादिभ्य: क्खुत्तो: कस्य ॥४।४।७४॥

अगंतादिशब्देभ्य: परस्य क्खुत्तोप्रत्ययस्य कस्य लोपो वा स्यात् । [12]अगंतखुत्तो, अगंतक्खुत्तो ॥

एक्कात्सि ॥२।४।८६॥

एक्कशब्दादुक्तेऽर्थे सिप्रत्यय: स्यात् । [13]एक्कसि ॥

प्रकारे हा तृतीयाया: ॥२।४।८७॥

तृतीयान्तसमर्थेभ्य: प्रकारेऽर्थे हाप्रत्यय: स्यात् । [14]सव्व-हा । [15]अण्णहा । [16]अट्ठहा । [17]जहा । [18]तहा ॥

---

१एकश: । २एकत: । ३द्रव्यत: । ४पृष्टत:।५कर्म्मत: । ६अर्थत: । ७धर्म्मत:।८द्विधा।९द्विकृत्व:।१०त्रिकृत्व:।११सहस्रकृत्व: ।१२ अनन्तकृत्व:।१३एकश:।१४सर्वथा।१५ अन्यथा।१६अष्टधा।१७यथा। १८तथा ॥

जताभ्यां हहमौ ॥२।४।८८॥

जतशब्दाभ्यां प्रकारेऽर्थे ह-हं-प्रत्ययौ च भवतः । जेह, जहं । तेह, तहं ॥

धा च ॥२।४।८९॥

प्रकारेऽर्थे धाप्रत्ययोऽपि स्यात् । तधा ॥

इयरस्येहरा ॥२।४।९०॥

इयरशब्दस्य प्रकारेऽर्थे इहरा इति वा निपात्यते । इहरा,[3] इयरहा ॥

कादहाहमिहेण्णाः ॥२।४।९१॥

प्रकारेऽर्थे कशब्दादह-अहम्-इह-इण्णा-प्रत्ययाः स्युः । कह,[4] कहं, किह, किण्णा ॥

इमस्यैत्थम् ॥२।४।९२॥

इमशब्दस्य प्रकारेऽर्थे एत्थमिति निपात्यते । एत्थं,[5] इत्थं ॥

एकात् त्तश्च ॥२।४।९३॥

सप्तम्यन्तादेकशब्दात् त्तप्रत्ययश्च स्यात् । एगत्त[6] ॥

त्थः सप्तम्या इमादिभ्यः ॥२।४।९४॥

सप्तम्यन्तसमर्थादिमादिशब्दात् त्थप्रत्ययः स्यात् ॥

तोत्थयोरेस् ॥२।१।४९॥

इमशब्दस्यैसादेशः स्यात्तो-त्थप्रत्यययोः । इत्थ, एत्थ । ईयरत्थ ॥

---

१ यथा । २ तथा । ३ इतरथा । ४ कथम् । ५ इत्थम् । ६ एकत्र । ७ अत्र । ८ इतरत्र ॥

इमाद्धहमौ च ॥२।४।९५॥

सप्तम्यन्तेमशब्दाद् ह-हंप्रत्ययौ च भवतः ॥

मस्य तो ण्हिं-दाणिं-ह-हं-तरेषु ॥२।१।५०॥

इमशब्दस्य मस्य लोपः स्यात्तो-ण्हिं-दाणिं-ह-हं-तरप्रत्ययेषु परेषु । इह[1], इहं ॥

इमजतकेभ्यस्तोः ॥२।४।५६॥

एभ्यस्तोप्रत्ययस्यादेर्द्वित्वं वा स्यात् । इत्तो[2], एत्तो, इतो, इओ । अतो[3] । कत्तो[4], कओ ॥

अहीहण्हवः कात् ॥२।४।९७॥

सप्तम्यन्तात्कशब्दाद् अहि-इह-ण्हु-प्रत्ययाश्च स्युः । कहि[5], किह, कण्हु, कत्थ ॥

उत्कस्य तो-त्थ-हिंसु ॥१।३।८२॥

कशब्दस्योकारान्तादेशो वा स्यात् तो-त्थ-हिंप्रत्ययेषु परेषु । कुतो[6], कुओ, कुत्थ ॥

जपगामाभ्यामाए: ॥२।४।६८॥

पञ्चम्यन्तसमर्थाभ्यामाभ्यामाएप्रत्ययश्च स्यात् । जाए[7], जत्तो, जओ, जतो । पगामाए[8], पगामतो ॥

---

१ इह । २ इतः । ३ अतः । ४ कुतः । ५ कहिं, कुत्र । ६ कुतः । ७ यतः । ८ प्रकामतः ॥

## तादादोतयश्च ॥२।४।६६॥

पञ्चम्यन्तात्तशब्दाद् आद्-ओ-ते-प्रत्ययाश्चकारादाए-प्रत्ययः स्यात्। ता[1]। तो। तते, तए। ततो, तओ, तत्तो। ताए॥

## एहं च जात् ॥२।४।१००॥

पञ्चम्यन्तजशब्दात् एहंप्रत्ययश्च स्यात्। जएहं[2]॥

## अं जताभ्याम् ॥२।४।१०१॥

पञ्चम्यन्तजतशब्दाभ्यामम्प्रत्ययोऽपि स्यात्। जं[2]। तं॥

## तस्मिन् काले दा सव्वादिभ्यः ॥२।४।१०२॥

सप्तम्यन्तसमर्थेभ्यः सव्वादिशब्देभ्यः काले इत्यर्थे दा-प्रत्ययः स्यात्॥

## सव्वस्य सो दे ॥१।४।६५॥

दाप्रत्यये सव्वशब्दस्य स इत्यादेशो वा स्यात्। सया, सदा। सव्वया[3]। अन्नया[4], अन्नदा। दकारस्य क्वचित्तकारश्र-वणात्, संता[5]। कंता[6]। जंदा[7]। तदा॥

## इमाणूणिंह-हुणा-दाणिमः ॥२।४।१०३॥

सप्तम्यन्तसमर्थादिमशब्दात्काले इत्यर्थे णिंह-हुणा-दा-णिप्रत्ययाः स्युः॥

---

१ ततः। २ यतः। ३ सर्वदा। ४ अन्यदा। ५ सदा। ६ कदा। ७ यदा॥

## ण्हिमि यः ॥१।४।१२२॥

इमस्योपधाया यकारादेशः स्यात् ण्हिप्रत्यये। इण्हि, इयण्हि। [1]अहुणा॥

## दाणिमि सर्वस्य लोपः ॥२।४।६३॥

इमशब्दस्याशेषस्य लोपो वा स्याद् दाणिप्रत्यये। [3]दाणिं, इयाणिं, इदाणिं॥

## आहेहिंहिहियमः कजतेभ्यः ॥२।४।१०४॥

एभ्यः सप्तम्यन्तेभ्य आहे-हिं-हि-हियंप्रत्ययाश्च स्युः। [4]काहे, कहिं, कहि, कहियं। [5]जाहे, जहिं, जहि, जहियं। [6]ताहे, तहिं, तहि, तहियं। वा० (ताद[*]इरिट् च दो वक्तव्यः) [7]तइ, तइया॥

## चिरार्थकेष्वेवैवचौ ॥२।४।१०५॥

कशब्दात्परिमाणेऽर्थे एव-एवचप्रत्ययौ भवतश्चिरार्थक-शब्देषु परेषु। [8]केवचिरं, केवचिरं। केवचिरेण॥

## सुप्तद्धिताभ्यामिमिदीचिचियाः ॥२।४।१०६॥

सुबन्तात्तद्धितान्ताच्च कशब्दात् इम्-इद्-ई-चि-च्चिय-प्रत्यया वा स्युः। [9]कयाइं। [10]केइं। [11]केणइ। [12]कस्सइ। [13]कण्हुइ। [9]कयाई। [14]कहिंचि, कुहिंच्चिय॥

1 इदानीम्। 2 अधुना। 3 इदानीम्। 4 कर्हि, कुत्र, क। 5 यर्हि, यत्र, यदा। 6 तर्हि, तत्र, तदा। 7 तदा। 8 कियच्चिरम्। 9 कदाचित्। 10 केचित्। 11 केनचित्। 12 कस्यचित्। 13 कुत्रचित्। 14 क्वचित्॥

*दाप्रत्ययस्य इट् वाच्य इत्यर्थः॥

इमादिभ्यश्चणमम्पूर्वकः ॥२।४।१०७॥

इम-एक-जाव-तावादिशब्देभ्यश्चणं प्रत्ययो वा स्यात्स विकल्पेनाम्पूर्वकश्च । इमंचणं[1] । एकंचणं[2] । जावंचणं, जावचणं[3] । तावंचणं, तावचणं[4] ॥

इणमादीनामेवे दीर्घः ॥१।३।८३॥

इणमादिशब्दानामुपधाया दीर्घो वा स्यादेवशब्दे परे । इणामेव[5] । जामेव[6] । तामेव[7] । जेणामेव[8] । तेणामेव[9] । खिप्पामेव, खिप्पमेव[10] । एवामेव, एवमेव[11] ॥

॥इति तद्धितप्रकरणम्॥

॥ इति श्रीलोङ्कागच्छान्तर्गतलिम्बडीसम्प्रदायतिलकायमानपूज्यपादश्रीगुलाबचन्द्रजित्स्वामिचरणाम्बुजचञ्चरीक-मुनिश्रीरत्नचन्द्रविरचितायां जैनसिद्धान्तकौमुद्यां पूर्वार्द्धं समाप्तम् ॥





१ इदंचन । २ एकंचन । ३ यावच्चन । ४ तावच्चन । ५ इममेव । ६ यमेव । ७ तमेव । ८ येनैव । ९ तेनैव । १० क्षिप्रमेव । ११ एवमेव ॥

# अथोत्तरार्द्धम् ॥

## अथाऽऽख्यातप्रक्रिया ॥

### क्रियायामश्वादयो धातवः ॥१।१।१४॥

क्रियावाचिनोऽश्वादिका धातुसंज्ञाः स्युः ॥

### धातोः ॥३।१।१॥

आसमाप्तेरधिकारोऽयम् ॥

### त्यादयः कर्तृकर्म्मणोः सकर्म्मकेभ्यो भावकर्त्रो-रकर्म्मकेभ्यः ॥३।१।२॥

त्यादयः प्रत्ययाः सकर्म्मकेभ्यो धातुभ्यः कर्त्तरि कर्म्मणि च स्युरकर्म्मकेभ्यो भावे कर्त्तरि च ॥

### आज्ञाभविष्यद्वर्त्तमानेषु तिन्तिसिहमिमवः ॥३।१।३॥

ति, न्ति, सि, ह, मि, मो, एते षट् प्रत्यया आज्ञायां भविष्यद्वर्त्तमानकालयोश्च धातोर्भवन्ति ॥

### द्वौ द्वौ प्रथममध्यमोत्तमाः ॥१।१।१६॥

एषु क्रमशो द्वौ द्वौ प्रत्ययौ प्रथममध्यमोत्तमसञ्ज्ञकौ स्तः ॥

### अम्हे समानाधिकरण उत्तमः ॥३।१।४॥

त्यादिप्रत्ययवाच्यकारकवाचिनि अम्हशब्दे प्रयुज्यमाने-ऽप्रयुज्यमाने चोत्तमः स्यात् ॥

तुम्हे मध्यमः ॥३।१।५॥

तथाभूते तुम्हशब्दे मध्यमः स्यात् ॥

शेषे प्रथमः ॥३।१।६॥

उक्तविषयादन्यत्र प्रथमः स्यात् ॥

एकवचनबहुवचने ॥१।१।१७॥

उक्तत्यादयः प्रत्ययाः प्रत्येकं प्रथमादिक्रमेणैकवचनबहु-वचनसञ्ज्ञाः स्युः। प्राकृते द्विवचनं नास्ति। परस्मैपदात्मनेप-दविभागोऽपि नास्ति॥ गच्छ गतौ। गच्छइ, गच्छंति। गच्छसि, गच्छह॥

हिमिमोष्वतो दीर्घः ॥३।१।७॥

एषु परेषु धातोरन्त्याकारस्य दीर्घः स्यात्। गच्छामि, गच्छामो॥

| | एकवचनम्. | बहुवचनम्. |
|---|---|---|
| प्र० | सो गच्छइ। | ते गच्छन्ति। |
| म० | तुमं गच्छसि। | तुम्हे गच्छह। |
| उ० | अहं गच्छामि। | अम्हे गच्छामो। |

प्रवर्त्तनायामेदिज्जौ ॥३।१।८॥

प्रवर्त्तनायामर्थे धातोरिज्ज-ए-प्रत्ययौ प्रथमादिषु त्रिषु, वचनयोश्च स्तः॥

इज्जस्य वा ॥३।१।९॥

इज्जप्रत्ययस्य दीर्घोऽन्तादेशो वा स्यात्। संयुक्ते विकल्पह्रस्व, गच्छिज्ज गच्छेज्ज, गच्छिज्जा गच्छेज्जा, गच्छे॥

## इज्जात्सिहमिमव: ॥३।१।१०॥

प्रवर्त्तनार्थेज्जप्रत्ययान्तधातो: सिहमिमोप्रत्यया वा स्यु: । गच्छेज्जासि, गच्छेज्जाह । गच्छेज्जामि, गच्छेज्जामो ॥

## आज्ञायां तिन्त्योरुः सेर्हिलोपौ ॥३।१।१३॥

आज्ञायामर्थे तिन्त्योरिकारस्योकार: सिप्रत्ययस्य हि-लोपश्च पर्यायेण स्यात् । गच्छउ, गच्छन्तु । गच्छाहि, गच्छ, गच्छह, वा० (हे गच्छादीनामेर्वा वक्तव्य:) गच्छेह । गच्छामि, गच्छामो ॥

## भविष्यति हिस्सौ त्यादिषु ॥३।१।१६॥

भविष्यदर्थे धातोर्हिस्सौ प्रत्ययौ स्तस्त्यादिप्रत्यये परे ॥

## हिस्सादीनामिट् ॥३।१।२०॥

हि-स्स-त्ता-त्तए-त्तु-त्था-ऊण-उं-मप्रत्ययानामिडागम: स्यात् । गच्छिस्सइ गच्छिस्सन्ति । गच्छिस्ससि, गच्छिस्सह ॥

## गच्छादिभ्य: स्सान्मे: ॥४।४।७५॥

गच्छादिधातुभ्य: परस्मात्स्सात्परस्य मेरन्त्यलोपो वा स्यात् ॥

## गच्छात्ससस्यमेरम् ॥३।१।३१॥

गच्छधातो: परस्य स्सप्रत्ययसहितस्य मिप्रत्ययस्यामादेशो वा स्यात् । गच्छिस्सामि, गच्छिस्सं, गच्छं, गच्छिस्सामो॥

*गच्छ, पति-अप्पिणा, पइक्ख, चिट्ठ, उत्-सव, आ-हिंड, एते गच्छादय: ॥

१ गच्छ, अहि-इ, वर, लुंच, साह, पुच्छ, रूव, लज्ज, भव, अहि-यास, दव, गाह, पज्ज, कर, निवार, साह, एते गच्छादय: ॥

हिप्रत्यये गच्छिहिति, गच्छिहिन्ति । गच्छिहिसि, गच्छिहिह ॥

## मादौ हेरात् ॥३।१।३२॥

धातोर्विहितस्य हिप्रत्ययस्याकारोऽन्तादेशः स्यान्मकारादिप्रत्यये परे । गच्छिहामि, गच्छिहामो ॥

## भूते इंसुः ॥३।१।३३॥

भूतेऽर्थे धातोरिंसुप्रत्ययः स्यात् प्रथमादिषु त्रिषु वचनयोश्च । गच्छिंसु ॥

## उपसर्गाः प्राक् ॥३।१।४९॥

उपसर्गा धातोः प्रागेव प्रयोक्तव्याः ॥

## अतेर्गच्छस्य गस्य ॥४।४।७७॥

अतिपूर्वकस्य गच्छधातोर्गस्य लोपो वा स्यात् । अइच्छइ, अइगच्छइ ॥ अच्छ उपवेशने ॥

## *अच्छादेस्तेरः ॥३।१।५०॥

अच्छादिभ्यः परस्य तिप्रत्ययस्यैकारोऽन्तादेशो वा । अच्छइ । अच्छते ॥

१ दीर्घविधौ साहचर्यात्त्यादेर्ग्रहणान्नात्र हौ दीर्घः ॥

* अच्छ, अग्घि, प-इस, सम्-ईह, उस, एस, कंख, कंडुय, पडिक्कमे, खुद्द, खुप्प, गग्ह, गस, चर, छिंद, जुज्ज, तण, दल, दव, दिस, दुय, देव, देह, द्दव, द्धंस, उद्-पज्ज, पुच्छ, भुंज, पलि-मंथ, मन्न, रुग, सम्-रक्ख, वि-रम, वि-राव, लह, उव-लिप, वंद, वड्ढ, वस्स, वुच्च, वोल्ल, सद्द, वीसम, सय, सर, अणु-सास, सस्सूस, सेव, सेह, हा, हो, एवोच्छद्द-द्रयः ॥

अण प्राणने । अणइ ॥

आतोऽणस्य मक् त्यादौ ॥४।४।११॥

आपूर्वकाणधातोर्मगागमो भवति त्यादौ प्रत्यये । आणमइ, आणमन्ति । पाणमइ, पाणमन्ति । अप्पाह सन्देहे । अप्पाहइ । अप्पाहामो। अप्पाहे ॥ अप्पिण अर्पणे । अप्पिणामि । पच्चप्पिणइ ॥ अय गतौ । उदयन्ति । पलायइ ॥

*अयादिभ्यस्तथा ॥३।१।३४॥

अयादिभ्यो भूतेऽर्थे त्थाप्रत्ययो वा स्यात् । विपलाइत्था। अस सत्तायाम् ॥

असस्य तितुमिषु ॥४।४।७८॥

असधातोरन्त्याकारस्य लोपः स्यात्ति-तु-मिप्रत्ययेषु परेषु॥

सात्थः ॥१।४।७॥

सकारात्परस्य तकारस्य थकारः स्यात् अत्थि

न्तन्तियास्वादेः ॥४।४।७६॥

असधातोरादेरकारस्य नित्यं लोपः स्यादेषु परेषु । सन्ति ॥

*अय, वि-आ-कर, जय, दल, उद्-धर, धार, धाव, पज्ज, अणु-भव, पाउर्-भव, मन्न, याम, अभि-रम, रिय, उद्-वाह, वि-प्प-सर, सेव, सह, हो, एतेऽयादयः ॥

## सिहमोव्वसस्य ॥४।४।८०॥

असधातोर्लोपः स्यात्सि-ह-मोप्रत्ययेषु । असस्येत्यनुवृत्तौ पुनरसस्येत्युपादानात्समुदायस्यैव लोपो नान्त्यस्य, सि । ह ।

## मौ वा ॥४।४।८१॥

असधातोर्लोपो वा स्यान्मिप्रत्यये । मि । पक्षे,

## समेरंसिरसस्य ॥३।१।५२॥

असधातोर्मिप्रत्ययसहितस्य अंसि इति निपात्यते । अंसि, मो ॥

## ×असादिभ्यो या ॥३।१।११॥

प्रवर्त्तनार्थेऽसादिधातुभ्यो याप्रत्ययः स्यात् । एदिज्जयोरपवादः ॥

## असचयजाणणहेभ्यो यः ॥३।१।२१॥

एभ्यः परस्य याप्रत्ययस्येडागमः । सिया । अत्थु ।

## असादिर्दीतौ ॥३।१।३५॥

असधातोर्भूतेऽर्थे इईप्रत्ययौ स्तः । ईसोरपवादः ॥

## आदेरिदीदिमोषु दीर्घः ॥३।१।५३॥

असधातोरादेर्दीर्घः स्यादि-ई-इमोप्रत्ययेषु परेषु । आसि, आसी । "आसी[1] विप्पो महाजसो" ॥

---

× अस, का, चय, छुभ, जंप, हव, बू, हण, एतेऽसादयः ।

---

1 आसीद्विप्रो महायशाः । (उत्त० २५—१) ।

मोरुत्तमबहुत्वे सेट् ॥३।१।३६॥

असधातोर्भूतेऽर्थे उत्तमबहुवचने मोप्रत्ययः स्यात् स च सेट्। आसिमो। "आसिमो भायरा दोवि" आस उपवेशने। आसइ। आसे। आस॥

न्तौ गिलादीनां यक् ॥४।४।१२॥

गिलादिधातूनां न्तिप्रत्यये यगागमः स्यात्। गिलायन्ति। इ गतौ। इन्ति। इन्तु। सवर्णदीर्घे संयुक्ते ह्रस्वे च, पलिन्ति। संपलिन्ति। सवर्णदीर्घे, अईति, अईइ। संपरीइ॥

पडिपतिपरिभ्यो यः ॥३।१।५५॥

एभ्यः परस्येधातोर्य आदेशः स्यात्॥

पतेर्द्वित्वं ॥३।१।५६॥

पतेरुपधाया द्वित्वं स्यादिधातौ परे। पत्तियइ, पत्तियन्ति। पत्तियसि। पत्तियामि। पत्तियाहि॥

पादेश्चिण् मोह्माणानामेट् ॥३।१।५४॥

पोपसर्गात्परस्येधातोश्चिडागमो मोह्माणप्रत्ययानामेडागमश्च स्यात्। पेचेमो। पेचेह॥

इति पूर्वपरयोरेः ॥३।१।५७॥

इधातोरिकारे परे पूर्वपरयोरेकार एकादेशः स्यात्।

---

१ आसिव भ्रातरौ द्वावपि। (उत्त० २३—५)।

---

* गिला, आ-ग्वा, चाय, जग्ग, भा, भिया, द्व, ता, दल, उव-आ-दा, परि-आ-दा, सम्-आ-दा, उद्-दा, आ-लय, न्हा, प-न्हा, माग, मिला, परि-मिला, वज्ज, वा, परि-निग्-वा, वेद, सिगा, हा, एते गिलादयः॥

एज्जा । पत्तिएज्जा । परिएज्जा ॥

विसमत्युद्भ्यश्च ॥३।१।५८॥

वि-सम्-अति-उत्परस्येधातोरेकार एकादेशः स्यात् । समेति, समेन्ति । अच्चेहि । उदेइ । वेइ ॥

न्तावेरद्वा ॥३।१।५६॥

एकारस्याकारो वा न्तिप्रत्यये परे । उवन्ति उविन्ति, उवेन्ति ॥

उदो ज्जो भविष्यति ॥३।१।६०॥

उत्पूर्वकादिधातोर्भविष्यदर्थे ज्जप्रत्ययः स्यात् । स्सादेरपवादः । उइज्जन्ति ॥

न्तौ वेः ॥३।१।६१॥

वेरुपसर्गात्परस्येधातोर्यकारादेशः स्यात् न्तिप्रत्यये परे । वियन्ति ॥

वेरदौ स्से ॥३।१।६२॥

वेरुपसर्गस्याकारोऽन्तादेशः स्यात् स्सप्रत्ययपरक इधातौ परे । वइस्सइ ॥ इ अध्ययने । अयं नित्यमहिपूर्वकः ॥

इज्जः स्वार्थेऽपि ॥३।१।४८॥

धातोरिज्जप्रत्ययः स्वार्थेऽपि बहुलं स्यात् । अहिज्जइ, अहिज्जन्ति । अहिज्जेज्जा । अहिज्जिस्सामि ॥

अहेरस्तौ ॥४।४।१३॥

अहेरुपसर्गात्परस्येधातोर्यगागमः स्यात्तिप्रत्यये परे । अहीयइ । गच्छादित्वात्, अहीस्सं । इच्छ इच्छायाम् । इच्छइ,

इच्छन्ति । इच्छसि । सवर्णदीर्घे सति ह्रस्वे, पडिच्छइ, प-डिच्छति । पडिच्छेज्जा । पडिच्छन्तु । ईह इच्छायाम् । ई-हइ । तेरेकारान्तादेशे तकारलोपे च, समीहए ॥ उञ्छ कौ-टिल्ये । उञ्छन्ति ॥

## उंचादीनां वा न्तौ ॥४।४।२५॥

एषां यगागमो वा स्यात् न्तौ परे । पलिउञ्छन्ति, पलिउञ्छ-यन्ति । उंछ सेचने । पुञ्छइ । पुञ्छे ॥ उञ्ज योगे ।

## उवादुंजस्य तौ ॥३।१।६५॥

उवोपसर्गात्परस्योंजधातोरुपधाया द्वित्वं स्यात्तौ परे । उवउञ्जइ ॥

## न्तौ वेः ॥३।१।६६॥

वेः परस्योंजधातोरुपधाया द्वित्वं स्यात् न्तौ परे । विउ-ञ्जन्ति । उण प्रावरणे । पाउणिस्सामि । पाउणिहिइ । ऊह वितर्के । अपोहए । एय कम्पने । एयइ एयति, एयन्ति । वि-एय=वेयइ वेयति । स्वरे परे यलोपे, एइस्सन्ति । एईसु । एस इच्छायाम् । एसइ । एसे । एसिज्जा, एसेज्ज ॥

## अनोरेसादेरिम् ॥३।१।६३॥

अनुपूर्वकादेसधातोः परस्यैप्रत्ययस्येमादेशः स्यात् । अ-न्वेसिं । कंडुय गात्रविघर्षणे । कंडुयए । कंडुइस्सामि । कंद आक्रन्दने । कन्दइ । कन्दिसु ॥

* उंच, खव, जग्ग, निज्जा, झिया, छव, आ-दा, नि-मन्त, मिल, एते उंचादयः ॥

धातूनां कण्णादीनाम्* ॥१।४।११॥

धातूनां मध्ये कण्णादीनामेव कस्य गकारयकारौ स्याताम्। कण्ण भेदने। प्रायेणायमापूर्वकः। आगन्नइ। कत्थ श्लाघायां व्यक्तायां वाचि च। कत्थइ॥

अतेतातिन्तेषूदः कसस्यात ओत् ॥३।१।६०॥

उदः परस्य कसधातोरादेरकारस्यौकारो वा स्यादत-इत-ति-न्तेषु प्रत्ययेषु। कस आकर्षणे। उक्कोसइ, उक्कसइ। का करणे। काइ॥

कादेर्न+ ॥३।१।२८॥

कादिगणपठितेभ्यः परस्य हसादेरिट् न स्यात्। काहिइ। सवर्णदीर्घे काही। काहिन्ति। "अन्नाणी किं काही, किं वा नाही य छेयपावगं"[1]॥

कः सीः ॥३।१।३८॥

काधातोर्भूतेऽर्थे सीप्रत्ययो वा स्यात्॥

भूते काकरदक्खुलभहोतराणामट् ॥४।४।३४॥

एषां भूतेऽर्थेऽडागमः स्यात्। अकासी॥

को यः सिट् ॥४।४।३३॥

काधातोः परस्य याप्रत्ययस्य सिडागमः स्यात्। कासिया।

---

* कण्ण, कड, कप्प, कर, कस, का, कास, कीर, कुट्ट, कुव्व, एते कण्णादयः॥

+ का, दा, ने, न्ना, पा, पी, वा, भा, एते कादयः॥

---

1 अज्ञानी किं करिष्यति किं वा ज्ञास्यति च छेकं पापकं (वा)। (दस० ४-१०)॥

किलिस्स किलेस क्लिस्स क्लिस उपतापे। किलिस्सइ, किलिस्सन्ति, किलेसन्ति। परिकिलेसन्ति। क्लिस्सन्ति। "कीवा जत्थ य क्लिस्सन्ति, नाइसंगेहिं मुच्छिया"[1]। कीर विक्षेपे। उक्कीरइ॥

वेः कीरस्य क्खिरः ॥३।१।६१॥

वेः परस्य कीरधातोः क्खिरादेशो वा स्यात्। विक्खिरइ। विक्खिरेज्जा। कुण करणे। कुणइ। कुणउ॥

कुणादिभ्यः सेरुः*॥३।१।१४॥

आज्ञायां कुणादिधातुभ्यः परस्य सिप्रत्ययस्योकारोऽन्तादेशो वा स्यात्। कुणसु, कुण॥

इणयोरिज्जकुणयोः ॥४।४।८२॥

कुणधातोर्णस्येज्जप्रत्ययेकारस्य च लोपः स्यात्। कुज्जा। कुठव करणे। कुव्वइ, कुव्वन्ति। कुव्विज्जा। विउव्वइ, विकुव्वइ। क्कम पादविक्षेपे। कमइ, कमति। अभिनिक्खमाहि॥

---

१ क्लीबा यत्र च क्लिश्यन्ति ज्ञातिसङ्गैर्मूर्च्छिताः। (सूय० १-३-२-१२)॥

*कुण, सम्-अप्प, प-कड, कह, क्खिव, खाम, गिणह, चिण, छिंद, जत, जय, जाण, जाय, हव, दल, दह, नव, पाल, प्फाल, भमाड, भास, भुंज, मन्न, मिल्लाव, मुंच, लुंच, वच्च, सुण, हव, एते कुणादयः॥

## अत्यप्यवानां च ॥४।४।८५॥

एषामादेरकारस्य लोपो बहुलं स्यात् । अवक्कमइ, वक्कमइ । ×अक्कमेज्जा । निक्खमइ । निक्खमे । पडिक्कमए । पडिणिक्खमइ, पडिनिक्खमइ । परक्कमेज्जा, परक्कमिज्जा, परक्कमिज्जासि ॥

## वेरितोऽतेरतीः ॥१।२।८॥

विसंबन्धिन इकारादतिसंबन्धिन्यकारे परे पूर्वपरयोरीकारादेशो बहुलं स्यात् । वीइक्कमति, वीतिक्कमति । क्कोस आक्रोशे । अक्कोसइ । पडिक्कोसइ । क्खंद पतने । पक्खन्दइ । खा अदने ॥

## *खादानां तौ ॥४।४।२६॥

खादीनां तौ परे यगागमो वा स्यात् । +खायइ, खाइ । खिंस निन्दायाम् । खिंसइ खिंसति, खिंसन्ति । खिंसइज्जा । गम गतौ । वा० (आगमनमाभ्यामित्येकारविकल्पे) आगमेइ, आगमइ । गरह गरिह निन्दायाम् । गरहइ गरहए, गरिहन्ति, गरहन्ति । गरिहामि । गरहेज्जा । गा गाने ॥

+ आकारस्य संयुक्ते परे ह्रस्वः ॥

*खा, आ-घा, ठा, अभि-ठा, ढल, णि-द्दा, न्हा, मिला, प-मिला, साह, एते खादयः ॥

गादीनामिज्जे ॥४।४।१४॥

गादीनामिज्जे परे यगागमः स्यात् । गाएज्जा । गिज्झ आशक्तौ । गिज्झइ । वा० (गिज्झादा च वक्तव्यः) । गिज्झा । गिज्झे । गिज्झेज्जा । गुर उद्यमने ॥

अवादपस्यादेर्लोपोऽनुस्वारश्च गुरे ॥४।४।३५॥

अवोपसर्गात्परस्यापोपसर्गस्यादेर्लोपोऽनुस्वारश्च स्तो गुरधातौ परे । अवंगुरे । ग्घा गन्धोपादाने ॥

ग्घो जिग्घः ॥३।१।९२॥

ग्घाधातोर्जिग्घादेशः स्यात्स्यादौ प्रत्यये । जिग्घइ ॥

आतो ग्घ आदेः ॥४।४।८३॥

आकारोपसर्गात्परस्य ग्घाधातोरादेर्लोपो वा स्यात् । स्वादित्वाद्यकारागमविकल्पे, आघायइ अग्घायइ अग्घाइ, आघायन्ति, अग्घायन्ति ॥

आग्घाझियर्योर्है॥४।४।१५॥

अनयोर्है परे यगागमः स्यात् । आघायह । चर गतौ । चरइ । आयरन्ति । णिचरइ । पयरइ । पडिचरति । पडियरइ । वियरए । वियरइ । समायरइ । समायरे । समायरिंसु । चिगिच्छ चिकित्सायाम् । चिगिच्छइ ॥

चिगिच्छस्यादेस्तः ॥३।१।६४॥

चिगिच्छधातोरादेस्तकारादेशो वा स्यात् । वितिगिच्छइ । वितिगिच्छामि । चिण चयने । चिणइ ॥

---

+ गा, खुभ, प-जा, पडि-निम्-जा, झिया, उव-द्दाव, परि-देव, निर्-द्दा, पडि-सम्-धा, मा, वा, हा, एते गादयः ॥

वा न्तौ ॥३।१।६७॥

चिणधातोरिणस्यायादेशो वा न्तिपरे । चयन्ति, चिणन्ति । चिणसु । चिणिसु । उवचिणइ, उवचिणन्ति । उवचिणिस्सन्ति ॥

समोहेरुस् ॥३।१।९८॥

संपूर्वकस्य चिणधातोः सम्बन्धिनो हेरुसादेशो वा स्यात् । आदिस्वरलोपे, संचिणु । जंप व्यक्तायां वाचि । जंपइ । जंपए ॥

न्तौ जंपस्य ॥३।१।८५॥

जंपस्योपधाया द्वित्वं वा स्यात् न्तिप्रत्यये । जप्पन्ति, जंपन्ति । जंभ गात्रविस्तारणे । वियंभइ । जत प्रयत्ने । जयइ । जये । कुणादित्वात्, जयसु । जहा त्यागे ॥

जहास्तिमाणणिज्जेषु ॥१।३।८१॥

जहाधातोरन्त्यस्य ह्रस्वो वा स्यात् ति-माण-णिज्जप्रत्ययेषु । जहइ जहाइ, जहति जहाति । जहासि । पूर्वस्वरलोपे, विजहिज्जा । विप्पजहति, विप्पजहाति । विप्पजहामि । विप्पजहे । जा गतौ प्रादुर्भावे च । जाइ ॥

जादीनां तौ ॥४।४।१६॥

जादिगणपठितानां यगागमः स्यात्तिप्रत्यये परे । जायइ । संयोगे परे ह्रस्वे, जन्ति । जायउ । अभिजायउ ॥

* प्रादुर्भावे जा, अभि-जा, सम्-जा, झा, आ-दा, गाह, वर, हा, आ-हा, एते जादयः ॥

जो हेः ॥३।१।२६॥

जाधातोः परस्य हिप्रत्ययस्येट् न स्यात्। अभिजाहिति॥

उदापेभ्यो जः ॥४।४।८४॥

उद्-आ-पेभ्यः परस्य जाधातोरुपधाया लोपो वा स्यात्। उदाइ। णिज्जाति। उंचादित्वात्, णिज्जायन्ति, णिज्जन्ति। णिज्जामि। णिज्जाउ। णिज्जाहिन्ति। णिज्जाइस्सामि। निज्जाइ। निज्जन्तु। णिज्जाइस्सामि। पजाएज्जासि, पयाएज्जासि। पजामि, पयामि॥

जः स्सस्यैट् ॥४।४।३६॥

जाधातोः परस्य स्सप्रत्ययस्यैडागमः स्यात्। इटोऽपवादः। पजाएस्सामि। पज्जायाइ, पज्जायन्ति। पज्जायाहिति, पज्जायाइस्सइ, पज्जायाइस्सन्ति। जाण अवबोधने॥

+जाणादीनां दीर्घो वा तौ ॥३।१।६६॥

जाणादिधातूनामन्त्यस्य दीर्घो वा तिप्रत्यये परे। जाणाइ, जाणइ॥

जाणस्यादेर्यः ॥१।४।६६॥

जाणस्यादेर्यकारो वा स्यात्। याणइ, जाणन्ति; याणन्ति। जाणामि, याणामि, जाणे। परियाणाइ, परियाणइ, परियाणन्ति। परियाणह। वियाणाइ॥

× जाण, किण, जूर, तिप्प, दल, धुण, लिह, पीड, एते जाणादयः॥

जाणहणाभ्यां वा ॥३।१।१२॥

जाणधातोर्हणधातोश्च प्रवर्त्तनायां याप्रत्ययो वा स्यात् । निआणिया, विजाणिया, विजाणिज्जा, विजाणेज्जा । कुणादित्वात्, वियाणसु, वियाणाहि । जूह मिश्रणे । निज्जूहन्ति । जोय दर्शने । जोयइ । उज्झा झिया ध्याने । झायइ, झाअइ, झायन्ति ॥

उज्झादलयोरिज्जे ॥४।४।२७॥

अनयोरिज्जप्रत्यये यगागमो वा स्यात् । झाएज्ज, झाइज्ज । झियायइ, झियाइ, झियायन्ति ॥

झियः सौ ॥४।४।१७॥

झियाधातोः सिप्रत्यये यगागमः स्यात् । झियायसि । झियामि । झियाए, झियाएज्जा । झियाहि, झियायह । डंस दशने ॥

डंसस्य तौ ॥४।४।८७॥

डंसधातोरनुस्वारस्य लोपः स्यात्तौ परे । डसइ । विडसइ । डी विहायसागतौ ॥

उदो डियो डास्थावयोः ॥३।१।८६॥

उदः परस्य डीधातोर्डा इत्यादेशः स्यात्तिप्रत्ययावप्रत्ययोः । उड्डाइ । ढा विदारणे । आढाइ, आढाति; आढायन्ति, आढन्ति । आढाहि, आढाह । णुल्ल प्रेरणे ॥

पकप्पपणुल्लाभिधाराणां मवि ॥४।४।१८॥

एषां मोप्रत्यये परे यगागमः स्यात् । पणुल्लयामो । पणुल्लिज्जा । तर तरणे सामर्थ्ये च । तरइ, तरन्ति । तरसि । तरे । तरिस्सन्ति, तरिहिन्ति । अतरिंसु । उत्तरइ उत्तरेइ, उत्तरिन्ति, उतरन्ति । उत्तरेह, उत्तरह । तकारस्य यकारे, ओयरइ । वियरइ, वितरन्ति । वियरिज्जा, वियरेज्जा । वियरिज्जह । तिप्प दुःखदाने तर्पणे तृप्तौ च । जाणादित्वात्, तिप्पाइ, तिप्पइ, तिप्पन्ति । तिप्पामि । तुर तूर त्वरायाम् । तुरन्ति । तूरन्ति । अभितूर । तुस संतोषे । तुसइ । संतुसइ ॥

समस्तुसस्यैति ॥३।१।६८॥

समः परस्य तुसधातोरुपधाया छित्वं स्यादेप्रत्यये परे । संतुस्से । त्तस उद्वेगे । परिवित्तसिज्जा ॥

त्तसस्यैत्योः ॥३।१।६६॥

संपूर्वकस्य त्तसधातोरुपधाया छित्वं स्यादेप्रत्यये तिप्रत्यये च परे । संतस्सइ । संतस्से । त्थुण स्तुतौ । संथुणइ ॥

इज्जे च समः ॥४।२।४१॥

समः परस्य त्थुणधातोस्थवादेशः स्यादिज्जे चकारादणवेषु परेषु । संथवेज्जा । दल दाने । जाणादित्वाद्वा दीर्घे, दलाइ, दलइ, दलयन्ति ॥

दलधारपूजानां मौ ॥४।४।१६॥

एषां मिप्रत्यये परे यगागमः स्यात् । दलयामि ॥

दलस्य हिमवोः ॥४।४।२८॥

दलधातोर्यगागमो वा स्याद्धिमोप्रत्यययोः । दलयामो, दलामो । दले, दलेज्जा, दलएज्जा । कुणादित्वात्, दलसु । विकल्पेन यगागमे, दलयाहि, दलाहि ॥

दलस्य हे ॥१।३।८४॥

अस्य दीर्घोऽन्त्यादेशो वा हप्रत्यये । दलाह, दलह । दलइस्सइ । दलइस्सामि । दह धारणे ॥

आनो दहस्य डः ॥१।४।६७॥

आनः परस्य दहधातोरादेर्डकारादेशः स्यात् । आडहइ, आडहन्ति । सद्दहइ, सद्दहाइ, सद्दहंति, सद्दहन्ति । सद्दहे, सद्दहेज्ज । सद्दहसु । सद्दहिस्सइ । दिप्प दीप्तौ । पइप्पए । दिस प्रेक्षणे दाने च ॥

एमाणयोर्दिसस्य प्रेक्षणे ॥१।३।२५॥

प्रेक्षणार्थे दिसधातोरिकारस्य वृद्धिः स्यादेमाणयोः परयोः ॥

एति दिसस्य हः ॥१।४।१२३॥

दिसधातोरुपधाया हकारः स्यादेप्रत्यये । देहए ॥

## दक्खुः सेसोर्दिसस्य ॥३।१।१०३॥

प्रेक्षणार्थकदिसधातोरिंसुप्रत्ययसहितस्य दक्खुर्निपात्यते। अदक्खु ॥

## सस्सहेर्दच्छिः ॥३।१।१०४॥

प्रेक्षणार्थकदिसधातोः स्सहिप्रत्ययसहितस्य दच्छिर्निपात्यते। दच्छिसि। दुस वैकृत्ये अप्रीतौ च ॥

## न्तौ पात् ॥३।१।७१॥

पोपसर्गात्परस्य दुसधातोरूपधाया छित्वं स्यात् न्तौ परे। पउस्सन्ति। दू गतौ परितापे च। अयं गतौ स्वार्थे इज्जप्रत्ययान्तः। दूइज्जइ। देव विलापे ॥

## देवादिभ्यस्तेः* ॥३।१।१००॥

देवादिधातुभ्यः परस्य तिप्रत्ययस्य दीर्घो वा स्यात्। परिदेवती। परिदेवए। परिदेवइ। परिदेवएज्जा। द्दा पलायने। उद्दाइ। गिलादित्वात्, उद्दायन्ति। णिद्दाएज्ज। निद्दाएज्ज। धाव शीघ्रगतौ। पहावइ। पहावए। परिधावन्ति। अयादित्वात्, परिधावित्था। धुण कम्पने। जाणादित्वात्, धुणाइ, धुणाइ, धुणन्ति। धुणे। निद्धुणे। नद अव्यक्ते शब्दे। णदइ। नदइ, णदन्ति। नम नम्रीभावे ॥

---

* देव, थण, देह, संधा, साय, एते देवादयः।

आगमनमाभ्यां तौ ॥३।१।१०८॥

आभ्यामेप्रत्ययो वा स्यात्तिप्रत्यये परे। णमइ, णमेइ, नमन्ति ॥

नमादेरेर्मवि ॥३।१।१११॥

नमादिधातोरन्त्यस्यैकारादेशः स्यात् मोप्रत्यये। नमिमो। नमह। उणामन्ति। उवणामन्ति। पणामइ, पणामेइ,। पणमिमो। पणमह। पच्चुण्णमन्ति। पच्चुन्नमन्ति। परिणमेइ, परिणामइ, परिणमन्ति। परिणमेज्जा, परिणामिज्जा। परिणमिस्सन्ति ॥

विप्पाभ्यां नमस्य वो न्तौ ॥१।४।१२५॥

विप्पोपसर्गपूर्वकस्य नमधातोरुपधाया वः स्यात् न्तिप्रत्यये परे। विप्पणवन्ति। नमंस नमस्कारे। णमंसइ, नमंसइ, णमंसन्ति। णमंसामि, नमंसामि, णमंसामो, नमंसामो। णमंसिज्जा, णमंसेज्जा। णमंसह। णमंसिहिति। णमंसिहामि। नस्स नाशे ॥

न्तीज्जयोः पविप्पाभ्याम् ॥१।२।३०॥

आभ्यां परस्य नस्सधातोः संयुक्तस्यादेर्लोपः स्यात् न्ति-इज्जपरयोः। पणस्सन्ति। विप्पणस्सेज्जा। ने प्रापणे ॥

एदोतश्चाभिज्जस्येतः ॥४।४।८६॥

एकारान्तादोकारान्ताच्च धातोः परस्येज्जप्रत्ययस्यैकारस्य

---

+ नम, इक्ख, नव, भण, भव, वच, सुण, हर, एते नमादयः ।

लोपो भवति । णेज्जाहि । अवणेज्जा । अवणेइ । आ-णेमि ॥

हिन्तयोर्नेरत् ॥३।१।११२॥

हिन्तपरयोर्नेधातोरकारान्तादेशो वा स्यात् । आणाहि, आणेहि, आणेइ । एकारस्य वैकल्पिक इकारादेशो, उवणि-न्ति, उवणेन्ति । उवणेहि, उवणाहि, उवणेइ । उवणेहि-न्ति । णीणेइ, णीणेति । परिणेहि ॥

पवेस्तौ ॥३।१।११३॥

पविपूर्वकस्य नेधातोरन्त्यस्याकारो वा स्यात्तौ परे ॥

पान्नयि वेः ॥१।३।८६॥

पात्परस्य वेरुपसर्गस्य दीर्घोऽन्तादेशो वा स्यात् ने-धातौ परे । पवीणेइ, पविणइ, पविणेइ ॥

अयोऽणेन्तीज्जहतारेषु ॥३।१।११४॥

नेधातोरन्त्यस्यायादेशो वा भवति अ-ण-ए-न्ति-इज्ज-ह-तारप्रत्ययेषु परेषु । विणयन्ति । विणएज्ज । विणएइ । समाणेन्ति । समाणेहिइ । संपवीणेमो । न्हा स्नाने । यका-रागमो वा, ण्हायइ, ण्हाइ, ण्हाति, ण्हायन्ति । पज्ज गतौ ॥

पज्जादीनां पो वः ॥१।४।१३॥

एषां धातूनामनादिभूतासंयुक्तपकारस्य वकारो वा

* पज्ज, पड, पिव, पीव, पय, एते पज्जादयः ॥

स्यात् । आवज्जइ । आवज्जे । उप्पज्जइ । उप्पज्जए । उप्पज्जन्ति । उप्पज्जिस्सन्ति । उप्पज्जिस्सं । उप्पज्जिंसु । उवसंपज्जइ । णिप्फज्जइ, निप्फज्जइ, । निप्फज्जए । पडिवज्जइ । स्वार्थे इज्ज:, पडिवज्जिज्जइ । पडिवज्जाहि । पडिवज्जिहिन्ति । पडिवज्जिस्सामि । समुप्पज्जइ । अयादित्वात्, समुप्पज्जित्था । समुप्पज्जिंसु । पड पतने । पडइ, पडन्ति । अहिवडन्ति ॥

## उपसर्गात्पडस्य यः ॥१।४।१२६॥

उपसर्गात्परस्य पडधातोरुपधाया यकारो बहुलं स्यात् । उप्पयइ, उप्पअइ, उप्पयन्ति । उप्पएज्जा । उप्पयाहि । उवयइ, उवयन्ति । ओवयन्ति । णिवडइ । निवडइ, निवयन्ति । निवडन्ति । पडियावयन्ति । पडियावएज्जा । पच्चोवयइ । संपडइ । संपयन्ति । पा पाने ॥

## आज्ञावर्त्तमानणिज्जेषु पिवपियौ पः ॥३।१।१०१॥

आज्ञावर्त्तमानार्थकप्रत्यययोः परयोर्णिज्जे च पाधातोः पिवपियावादेशौ पर्यायेण स्याताम् । पिवइ, पियइ, पिवन्ति । पियसि । पिअामो ॥

## प्रवर्त्तनायां वा ॥३।१।१०२॥

प्रवर्त्तनार्थे पाधातोरुक्तावादेशौ वा स्याताम् । पिवे, पिए । पाइज्जा । पियह । आविअइ । आविए । पुच्छ प्रश्ने । पुच्छइ । पुच्छए । पुच्छन्ति । पुच्छसि । पुच्छामो । पुच्छिज्ज, पुच्छिज्जा । पुच्छ । पुच्छिस्सामि, पुच्छिस्सं, पुच्छिस्सामो ॥

## पुच्छादेर्वा ॥३।१।३६॥

पुच्छधातोरेप्रत्ययो वा भूतेऽर्थे । पुच्छिंसु । पुच्छे । आपुच्छइ ।

पडिपुच्छइ, पडिपुच्छन्ति। पडिपुच्छउ। पूज पूजायाम्। पूयइ, पूअन्ति। पूअयामि। फुट्ट स्फुटने। फुट्टइ॥

फुट्टस्य टयोर्डस्त्तान्तहिप्रेरणासु ॥३।१।११५॥

फुट्टधातोष्टकारयोर्डकारादेशः स्यात् त्ता-न्त-हिप्रत्ययेषु परेषु प्रेरणार्थे च। फुड्डिही। फुस स्पर्शे शुद्धौ च। फुसइ, फुसन्ति। फुसिज्ज। फुसन्तु। संफुसिज्जा। बंध बन्धने। बंधइ, बंधन्ति। बंधेज्जा॥

बंधरुंभहिंडेभ्यो हेरेट् ॥४।४।३७॥

बन्धादिधातुभ्यः परस्य हिप्रत्ययस्यैडागमः स्यात्। इटोऽपवादः। बंधेहिति, बंधिस्सन्ति॥

बंधादीः ॥३।१।४०॥

बंधधातोरीप्रत्ययो वा स्याद् भूतेऽर्थे। बंधी। पक्षे इंसुः, बंधिंसु। बीह भये॥

बीहस्य भायभीयौ तयि ॥३।१।११६॥

बीहधातोर्भाय भीय इत्येतावादेशौ स्तस्ते परे। भायए। भीयए। भय सेवायाम्। भयइ, भए, भइज्ज। विभयन्ति। विभए। भण कथने। भणइ। नमादित्वात्, भणिमो, भणिहामि। भम भ्रमणे। भमइ। भमिही। भमिहिन्ति। उब्भमन्ति। भव सत्तायाम्। भवइ, भवति, भवन्ति। भवसि, भवह। भवामि, भवामो। भवेज्जासि, भवेज्जाह, भवेज्जामि।

भवे, भवेज्जा। भवउ, भवतु, भवन्तु। भव। भविस्सइ, भविस्सन्ति। भविस्सह। भविस्सामि, भविस्सं, भविस्सामो॥

भवस्य भुवीभुविमौ ॥३।१।४१॥

भवधातोर्भूतेऽर्थे भुवी भुविं इति वा निपात्येते। भुविं, भुवी। पक्षे इंसुप्रत्यये,

भवस्येंसावट् ॥४।४।४६॥

भवधातोरिंसुप्रत्यये परेऽडागमः स्यात्। अभविंसु। पाउर्पूर्वकस्य अयादित्वात्, पाउब्भवित्था। भा दीप्तौ। भाइ। भाउ। पडिहाइ। भिंद् विदारणे। भिन्दइ, भिन्दन्ति। भिन्दे, भिन्दिज्जा, भिन्देज्जा। भिन्द। भिन्दिहिति॥

आतो भिंदस्यादेरेति द्धिः ॥३।१।१२१॥

आकारोपसर्गात्परस्य भिन्दधातोरादेर्द्धित्वं स्यादेप्रत्यये। अब्भे। भुंज भक्षणे भोगे च। भुंजइ, भुंजए, भुंजन्ति। भुंजामो। भुंजे, भुंजिज्ज, भुंजेज्ज, भुंजेज्जा। कुणादित्वात्, भुंजसु, भुंजाहि, भुंज, भुंजह॥

भुंजारखड् ॥३।१।१७॥

अस्माद्धातोः खड्प्रत्ययः स्याद् भविष्यदर्थे त्यादौ परे॥

खडि भुंजस्य ॥१।३।२६॥

भुंजधातोरुकारस्य वृद्धिः खडि परे। भोक्खामि। संयुक्ते परे ह्रस्वविकल्पे, भुक्खामो, भोक्खामो। उवभुंजइ। उवभुंजसि। परिभुंजइ। संभुंजेज्जा। मन्न अवबोधने। मन्नइ। मन्नए। मण्णइ, मन्नन्ति। मन्नसि॥

## मज्ञान्मेरेस् वा ॥३।१।१२३॥

मन्नधातोः परस्य मिप्रत्ययस्यैसादेशो वा स्यात्। मन्ने, मन्नामि, मण्णामि, मण्णे। मण्णेज्ज। कुणादित्वात्, अणुमन्नसु, अयादित्वात् अणुमन्नित्था। मर प्राणत्यागे। मरइ मरए। मरन्ति। मरसि। मरिस्सन्ति। मा माने। माएज्जा। माहिइ। माद् प्रमादे। प्रवर्त्तनायामेप्रत्यये प्रकृतिभावे, पमायए। मिल संगमे॥

## मिलस्य ये ॥१।३।८५॥

मिलधातोर्दीर्घोऽन्तादेशः स्याद् यकारे परे। मिलायन्ति। मिलन्ति। मुच्छ मूर्च्छायाम्। मुच्छइ। मुच्छिज्जा॥

## समो मुच्छे न्तिमयोः ॥४।४।९०॥

समो मकारस्य लोपो वा स्यान्मुच्छधातौ न्तिमपरके। समुच्छन्ति, संमुच्छन्ति। रंभ आरम्भे। आरंभइ। आरंभे। समारंभइ, समारंभन्ति॥

## न्तेः समारंभात् ॥ ३।१।१२४॥

सम्-आपूर्वकस्य रंभधातोः परस्य न्तिप्रत्ययस्यैसादेशो वा स्यात्॥

## समारंभस्यैसेत्तासु ॥४।४।८८॥

रंभधातोरनुस्वारस्य लोपः स्यादेस्- ए- त्ताप्रत्ययेषु। समारभे, समारंभन्ति। "माइणो कट्टु माया य, कामभोगे समारभे"[1] ॥

---

१ मायाविनः कृत्वा मायाश्च, कामभोगान् समारभन्ते।(सूय० १-८-५)।

रंभरक्खहणहरेषु समः साः ॥३।१।१२५॥

एषु परेषु समः सादेशो वा स्यात्। सारंभइ, समारंभइ। रक्ख रक्षायाम्। रक्खेज्ज। रक्ख, रक्खाहि। सारक्खइ, संरक्खए, सारक्खन्ति, संरक्खन्ति। सारक्खामि, संरक्खामि। सारक्खाहि, संरक्खाहि। रिय गतौ ॥

रियस्येतो दीर्घः ॥३।१।१२०॥

रियधातोरिकारस्य दीर्घो वा स्यात्त्यादौ परे। रीयइ, रियइ रीएज्जा, रीइत्था। रुंभ आवरणे। रुंभइ। णिरुंभइ, णिरुंभन्ति। बन्धादित्वात्, णिरुंभेहिति ॥

रुंभस्येज्जे ॥३।१।७३॥

रुंभधातोरुपधाया द्वित्वं स्यादिज्जप्रत्यये ॥

डेज्जयोर्भस्य झो रुंभस्य ॥३।१।१२६॥

रुंभधातोर्भस्य झकारादेशः स्यादिज्जडप्रत्यययोः। विरुज्झेज्जा। रुद् अश्रुविमोचने ॥

रुदस्यान्ततिन्तिहिमाणेषु ॥१।३।२७॥

रुद्धातोरुकारस्य वृद्धिर्वा स्यात् अन्त-ति-न्ति-हि-माणेषु परेषु। रोयइ,रुयइ। रोयन्ति, रुयन्ति। रुय।

दो वः ॥१।३।२८॥

रुद्धातोर्दकारस्य वकारो वा स्यात्त्यादौ। रुवे। रोव। लभ प्राप्तौ। लभइ, लहइ, लहए, लहन्ति। लहसि। लभामि। लहे लभिज्जा, लभेज्जा। लहन्तु। लहह। लभिहिति। लभिस्सामि ॥

### लभाद्धस्य तड् ॥३।१।१८॥

भविष्यदर्थे लभधातोः परस्य हप्रत्ययस्य तडादेशः स्यात्। लहित्थ ॥

### लभादिण् ॥३।१।४२॥

भूतेऽर्थे लभधातोरिणप्रत्ययः स्यात्। अडागमः, अलाहि ॥

### आदुपोवेभ्यो लभस्यानुसारोऽतिसित्ताणमाणेषु ॥ ४।४।३८॥

आ-उप-उवोपसर्गेभ्यः परस्य लभधातोर्लकारस्यानुस्वारागमो वा स्याद् अ-ति-सि-त्ता-ण-माणेषु परेषु। उवालंभति। उपलंभसि। आदुपोवेभ्य इति किम्, पडिलभामि। पडिलभे। लव व्यक्तायां वाचि। लविज्जा, लवे। आलवइ, उल्लवइ। लुण छेदने। लुणन्ति ॥

### लुणस्येज्जे यः ॥१।४।१२७॥

लुणधातोरुपधाया यकारः स्यादिज्जे परे। लुएज्जा ॥ वच्च व्यक्तायां वाचि ॥

### वच्चाच्छट्खडौ भविष्यति ॥३।१।१२७॥

भविष्यदर्थे वच्चधातोश्छड्प्रत्ययः खड्प्रत्ययश्च स्यात्स्यादौ परे।

### ओदादेरतश्छडि ॥३।१।१२८॥

छडिपरे वच्चधातोरादेरकारस्यौकारः स्यात्। संयुक्ते ह्रस्वविकल्पे, वुच्छामि, वोच्छामि, वुच्छं, वोच्छं। वक्खति। वक्खामो ॥

पत्रोच्छाड्डिस्त्यादौ ॥३।१।१२६॥

पात्परस्माच्छड्प्रत्ययान्ताद्धातोर्ड्डिप्रत्ययः स्यात्त्यादौ परे। पच्छिड्डि। लुभ लोभे॥

लुभस्य तित्तयोः ॥३।१।७४॥

अस्योपधाया ढित्वं स्यात्तित्तप्रत्यययोः परयोः। लुब्भइ। वह प्रापणे पीडायां च॥

वहस्येहौ झो ढिश्च ॥१।४।१२८॥

वहधातोरुपधाया झकारादेशो ढित्वं च स्यादिहौ परे॥

इहौ वहस्य ॥३।१।१३०॥

वहधातोरकारस्योकारः स्यादिहौ परे। वोज्झिहिन्ति। घा वायुसंचरणे॥

वः ससस्य ॥३।१।२३॥

वाधातोः परस्य ससप्रत्ययस्येडागमः स्यात्। अनिट्त्वाद्प्राप्तौ वचनम्, परिनिव्वाइस्सन्ति। विंध ताडने॥

विंधस्य तिन्त्योः ॥१।४।१३१॥

विंधधातोरुपधाया झकारो ढित्वं च वा स्यात्तिन्तिप्रत्यययोः परयोः। विज्झइ, विंधइ, विज्झन्ति। व्वय गतौ॥

व्वयस्य चस्त्यादौ ॥१।४।१३२॥

व्वयधातोरुपधाया अकारो ढित्वं च वा स्यात्त्यादौ परे। वच्चइ, वयइ, वइ, वच्चन्ति। नमादित्वात्, वच्चिमो, वच्चामो।

वए, वएज्ज । वच्चउ । कुणादित्वात् ,वच्चसु, वच्च, वयाहि, वयह ॥

## अण्वतिभ्यां व्वयस्य ॥४।४।६१॥

अणुअतिभ्यां परस्य व्वयधातोरादेर्वकारस्य लोपः स्यात् । संयुक्तस्यादित्वाभावादप्राप्ते लोपे वचनम्, अणुवयामो । अतिवयन्ति । अण्वतिभ्यामिति किम्, अणुपव्वयति, पव्वयामि। पव्वएज्जा । पव्वयह । पव्वइहिति । पव्वइहिसि,पव्वइस्ससि । पव्वइस्सामि, पव्वइस्सामो ॥

## परेर्वा ॥४।४।६२॥

परिपूर्वकस्य व्वयधातोरादेर्वकारस्य लोपो वा स्यात् । अप्राप्तविभाषेयम् । परिव्वए, परिव्वएज्जासि । वीइवयइ, वीइवयति, वीतिवयति, वीइवयन्ति, वीतिवयन्ति । वीइवयामि । वीइवएज्जा, विइवयेज्जा । वीइवयह । वीइवइस्सइ, वीइवइस्सन्ति । सुपरिवएज्जा । स अवसाने । ववससि,

## व्यवाभ्यां सस्यैति ॥३।१।१२२॥

आभ्यां परस्य सधातोरुपधाया छित्वं स्यादेकारे परे । ववस्से । सह आस्वादने ॥

## सहस्यास्वादे दयोस्तौ यः ॥१।४।६८॥

अस्य धातोर्दकारयोर्यकारः स्यादास्वादेऽर्थे तौ परे । सयइ । सहए । सय शयने । सयइ, सयन्ति । सए । सएहि, सइस्सामो । सास अनुशासने । अणुसासए । अणुसासन्ति । अणुसाससि ॥

## सासस्य मौ ॥४।४।४०॥

सासधातोरन्त्यस्यानुस्वारागमः स्यान्मिप्रत्यये परे। दीर्घस्यापवादः। अणुसासंमि। सिण सेवायाम्। अयं धातुः समुत्पूर्वक एव दृश्यते ॥

## उत् सिणस्य मौ ॥१।३।८८॥

सिणधातोरन्त्यस्योकारो वा स्यात् मिप्रत्यये परे। पक्षे दीर्घः। समुस्सिणोमि, समुस्सिणामि। सिर विसर्गे। णिसिरइ, णिसिरन्ति। णिसिरामि, णिसिरामो। निसिरइ। निसिरे ॥

## इज्जे सिरस्य सो विउभ्याम् ॥३।१।१३३॥

विउभ्यां परस्य सिरधातोः सादेशः स्यादिज्जप्रत्यये परे। विउसिरे, विउसेज्ज। सिव्व तन्तुसन्ताने ॥

## सिव्वस्य स्से सीवः ॥३।१।१३४॥

सिव्वधातोः सीवादेशो वा स्यात् स्सप्रत्यये। सीविस्सामि, सिव्विस्सामि। सीय विशरणे। सीयइ, सीयति। अवसीयइ। णिसीयइ, णिसीयन्ति ॥

## ह्रस्वो णेः सीयस्य न्ति- मो- माणेषु ॥३।१।१३५॥

णेरुपसर्गात्परस्य सीयधातोरीकारस्य ह्रस्वो वा स्यात् न्ति- मो- माणप्रत्ययेषु। णिसियन्ति। णिसीयामो, णिसियामो। णिसीयह। निसीयइ, निसीयन्ति ॥

## न्तीज्जयोर्वज्जः ॥३।१।१३६॥

निपूर्वकसीयधातोर्वज्जादेशो भवति न्तिप्रत्ययेज्जप्रत्ययोः।

निवज्जन्ति। निसीए, निसीइज्जा, निसीएज्ज। निवज्जेज्जा। निसीइस्सामो। विसीय। सुड निन्दायाम्। स्वार्थे इज्ज, सुडिज्जउ। सुय शयने॥

सुयस्य वस्तितयोः॥१।४।१३३॥

सुयधातोरुपधाया वो वा स्यात् तिप्रत्यये ते च। सुवइ, सुयइ। सुस्सुस सेवायाम्॥

उतः सुस्सुसस्यान्त्यस्य॥१।३।८७॥

सुस्सुसधातोरन्त्यस्योकारस्य दीर्घो वा स्यात्। सुस्सूसइ, सुस्सूसए। सुस्सुसइ, सुस्सुसए। सोय शोके। सोयइ, सोयन्ति। सोयामि। सोइज्जा। स्सम परिश्रमे। समइ। वीसमइ, वीसमति। वीसमए, वीसमन्ति। वीसमेज्ज। वीसमउ, वीसमह। स्सय सेवायाम्। दीर्घात्परत्वात्संयुक्तादि-लोपे, आसयइ, आसयति। उवसमए। पलिस्सएज्जा। स्सस प्राणने। ऊससन्ति। नीससन्ति। वीससइ। वीससे। हंद ग्रहणे। हंदि। हंदह। हण हिंसायाम्। हणइ। हणसि। हणेज्जासि। हणामि। हणिया, हणे, हणेज्जा। हणह। निहणिंसु। पहणइ। पहण, पहणाहि। पडिहणइ, पडिहणन्ति

वेर्हणस्य तीज्जयोः॥३।१।७५॥

वेरुपसर्गात्परस्य हणधातोरुपधाया छित्वं स्यात्तिप्रत्यये इज्जप्रत्यये च परे। विहच्छइ। विहच्छिज्जा। समोहणइ समो-हणिहिति। साहणन्ति, साहणेज्जा। हिण्ड गतौ हिण्डन्ति।

आहिंडइ। आहिंडसि। आहिंडेह, आहिंडह। हो सत्तायाम्। होइ, होन्ति, हुन्ति। ओकारान्तत्वादिकारलोपः, होज्ज, होज्जा, हुज्ज, हुज्जा। हुज्जामि। होउ। होहि। ... होहिइ, होहिन्ति॥

होः स्सस्य क्खः ॥३।१।१३७॥

होधातोः परस्य स्सप्रत्ययस्य क्खः स्यात्। होक्खामि।

होर्हीसिः ॥३।१।४३॥

भूतेऽर्थे होधातोर्हीसिप्रत्ययः स्यात्। अहिसि, हुत्था, होत्था। अणुहोइ, अणुहुन्ति, अणुहोंति। अणुहोहि, अणुहोह। अणुहोहिइ॥

पाद्धोर्हुप्पः ॥४।४।४१॥

पोपसर्गात्परस्य होधातोर्हुप्प इत्यादेशः स्यात्त्यादौ। पहुप्पइ। पहुप्पते। पहुप्पन्ति॥

॥ इति प्रथमो गच्छादिगणः॥

## अथैकारविकरणः करादिगणो द्वितीयः॥

कर करणे॥

करादिभ्यः कृदाज्ञावर्त्तमानेष्वेः ॥३।१।१०५॥

करादिगणपठितेभ्यो धातुभ्य एप्रत्ययः स्यात् कृत्प्रत्ययेषु आज्ञावर्त्तमानार्थकत्यादिप्रत्ययेषु च परेषु। करेइ। एकारस्याकारादेशविकल्पे, संयुक्ते ह्रस्वविकल्पे च, करन्ति, करिन्ति, करेन्ति। करेसि। करेमि। करिज्जा, करेज्जा, करिज्जासि, करेज्जासि। करिज्जामि। करेहि, करेह। करिस्सइ, करिस्सन्ति॥

## भविष्यति वा ॥३।१।१०६॥

भविष्यदर्थे करादिधातोरेप्रत्ययो वा स्यात् । पक्षे इट्, करेहिन्ति, करिहिन्ति ॥

## +णुक्करादीनां त्यादौ ॥१।३।२६॥

णुक्करादिधातूनामादिस्वरस्य वृद्धिर्वा स्यात्त्यादौ परे। णुक्कारेन्ति । सक्कारेन्ति । करेस्ససि । करेस्सामि, करिस्सामि, करेस्सं । करिस्सामो ॥

## करादिस्सम् ॥३।१।१०७॥

करधातोर्भूतेऽर्थे इस्संप्रत्ययो वा स्यात् । पक्षे इंसुः । अकरिस्सं, अकरिंसु ॥

## पुदवाभ्यां न ॥३।१।११०॥

पुत्-अवाभ्यां परस्मात्करधातोरेप्रत्ययो न स्यात् । अवयरइ ॥

## करादापसद्भ्यः ॥३।१।१०९॥

आपसद्भ्यः परस्मात्करधातोरेप्रत्ययो वा स्यात् । वागरइ, वागरेइ, वागरेति, वियागरन्ति । विआगरे, वियागरे, वियागरेज्जा, वियागरेज्ज । वागरेहि । वागरिहिति । वागरित्था ॥

## अवात्करस्य क्खडः पाके ॥३।१।१३८॥

उवोपसर्गात्परस्य करधातोः क्खडादेशः स्यात्पाकेऽर्थे । उवक्खडेइ, उवक्खडिन्ति । उवक्खडिज्ज । उवक्खडेउ ।

---

+ णुत्-कर, आ-नव, उ-द्दव, उव-द्दव, धिक्-कर, नि-सम, प-द्दव, परि-द्दव, सत्-कर, एते णुक्करादयः ।

पाके किम्, उवकरेउ। पकरइ, पकरेइ, पकरन्ति, पकरेन्ति, पगरन्ति। पकरेज्जा। पकरेह। पाउकरिस्सामि। पुक्करइ, पुक्करन्ति। पुराकरन्ति। सक्कारेइ, सक्कारइ। समलंकरेइ। अंज व्यक्तौ॥

अभेरंजस्य गः ॥१।४।१३४॥

अभेरुपसर्गात्परस्यांजधातोरुपधाया गकारादेशः स्यात्। अब्भंगेइ, अब्भंगन्ति, अब्भंगेन्ति। अब्भंगिज्ज, अब्भंगेज्जा।

अच्च पूजायाम्। अच्चेइ, अच्चेन्ति॥

अच्चान्मोरुर्वा ॥३।१।१५३॥

अच्चधातोः परस्य मोप्रत्ययस्योकारान्तादेशो वा स्यात्। अच्चेमु। नमादित्वात्, अच्चिमो। "अच्चेमु ते महाभाग! न ते किंचि न अच्चिमो"। ओयव संसिद्धौ जये च। ओयवेइ, ओयवेहि। कास दीप्तौ। पयासेइ, पकासेइ। पयासेह। किलाम ग्लानौ। किलामेइ॥

किलामस्य वो न्तिकर्मणोः ॥१।४।१३६॥

किलामधातोरुपधाया वकारादेशः स्यात् न्तिकर्मणोः। किलावन्ति। किलामेसि। ग्गह ग्रहणे। गहेइ। निग्गहेज्जा। पडिग्गहेइ। पडिग्गहेज्जा। घात हिंसायाम्। घाएइ, घाएन्ति। घायए। उग्घाअइ। संघातइ, संघाएइ, संघायन्ति। संघाएह। चय सामर्थ्ये। चएइ, चयन्ति॥

१ अर्चयामस्ते महाभाग! न ते किञ्चिन्नार्चयामः।(उत्त० १२-३४)

## चयस्य क्को ये ॥१।४।१३७॥

याप्रत्यये परे चयधातोरुपधायाः क्कादेशः स्यात् । असा-दित्वादिज्जादिकं बाधित्वा याप्रत्यये, चक्किया । चोय प्रेरणे। चोययन्ति । पडिचोएन्ति । पडिचोएउ । पडिचोएह । च्छंट सेचने । वा० (च्छंटस्य च्छोडो वा वक्तव्यः) अच्छोडेइ । जोय द्योतने । जोइन्ति । जोइस्सन्ति । जोइंसु ॥

## जोयस्य वः ॥१।४।१३८॥

जोयधातोरुपधाया वकारादेशो वा स्यात् । उज्जोवेइ, उज्जोएइ, उज्जोवेन्ति । ज्झाम ज्वलने । झामेइ । झामेज्जा ॥

## ज्झामस्य तौ वा लोपः ॥१।४।१३९॥

वेरुपसर्गात्परस्य ज्झामधातोरुपधाया लोपो वा स्यात्तौ परे । विज्झाउ । तक्क कल्पनायाम् । तक्केइ । वियक्केइ । ताड ताल ताडने । ताडिन्ति । ताडेज्जा ॥

## ताडस्य पंतावे ॥३।१।४४॥

भूतेऽर्थे ताडधातोः पंतावे इति निपात्यते । पंतावे । तालेइ, तालेन्ति । तालेज्जा । दा दाने । देइ, देति, देन्ति, दिन्ति ॥

## एति दो ह्रस्वः ॥१।३।८९॥

दाधातोर्ह्रस्वोऽन्तादेशः स्यादेप्रत्यये परे । दए, देज्जा, दिज्जा । दाहिइ ॥

## दो हे हस्य त्थः ॥३।१।६९॥

दाधातोः परस्मात् हिप्रत्ययात्परस्य हप्रत्ययस्य त्थादेशः

स्यात् । दाहित्थ । दाहं, दाहामि ॥

हेर्मोः ॥१।३।६०॥

दाधातो र्हिप्रत्ययात्परस्य मोप्रत्ययस्य ह्रस्वः स्यात् । दा-हामु ॥

आत इत् ॥१।३।६१॥

आकारोपसर्गात्परस्य दाधातोरिकारोऽन्तादेशो वा स्या-त् । आदियइ । आदिए ॥

पाद्यच्छः ॥१।३।६२॥

पोपसर्गात्परस्य दाधातोर्यच्छादेशो वा स्यात् । पय-च्छइ । पयच्छामि, पयच्छामो ॥

पस्योणदेज्जागाट्टिसव्वणासु ॥१।३।६४॥

पोपसर्गस्य दीर्घोऽन्तादेशः स्याद्दुणइज्जप्रत्ययान्तदा इप्रत्य-यान्तवत्तणाप्रत्ययान्तसवधातुषु परेषु । पादेज्जा । दाल उद्घाटने विदारणे च ॥

अवाद् दालस्य तावादेः ॥३।१।८८॥

अवोपसर्गात्परस्य दालधातोरादेर्द्वित्वं वा स्यान्निप्रत्यये परे । अवद्दालेइ, अवद्दालेति, अवदालेइ । दीव दीप्तौ । दीवेइ, दीवन्ति ॥

पादिज्जे ॥१।४।१००॥

पात्परस्य दीवधातोरादेर्लकारादेशः स्यादिज्जप्रत्यये । पली-वेज्जा । धार धारणे । धारेइ, धारन्ति । धारए, धारिज्जा, धारेज्जा । धारिस्सइ । धारिस्सामि । अभिधारयामो । अभि-धारए । पधारेइ, पधारेति ॥

धांदीनां* धभयोर्हः ॥१।४।१४॥

एषां धातूनामनादिभूतासंयुक्तावयवयोर्धकारभकारयोर्हकारादेशो वा स्यात्। पहारेज्जा ॥

एति समुदो धारस्य ॥१।३।६६॥

समुदः परस्य धारधातोराकारस्य ह्रस्वः स्यादे प्रत्यये परे। समुद्धरे। संपहारिंसु। धुक्ख उद्दीपने ॥

धुक्खस्य कः ॥१।४।१४०॥

धुक्खधातोरुपधायाः को वा स्यात्। संधुक्केइ, संधुक्खेइ, संधुक्खेति। पार कर्मसमाप्तौ। पारेइ, पारेति, पारेन्ति। बु व्यक्तायां वाचि ॥

बोस्तिन्त्योराहः ॥३।१।१४१॥

बुधातोराहादेशो वा स्यात्तिन्तिप्रत्यययोः परयोः ॥

आहाल्लोप उदंसू ॥३।१।१४२॥

आहात्परस्य तिप्रत्ययस्य लोपो न्तिप्रत्ययस्य उद् अंसु-इत्यादेशौ स्तः। बेइ, आह, विन्ति, बेन्ति। आहु, आहंसु ॥

न्तावोरूवः ॥३।१।१४३॥

बुधातोरुकारस्योव इत्यादेशो वा स्यात् न्तिप्रत्यये परे। ब्रूविन्ति ॥

बोमौ ॥४।४।२९॥

बुधातोर्यगागमो वा स्यात् मिप्रत्यये परे। बुयामि, बेमि ॥

* धा, धम, धार, धोल, भा, भास, भोग, लभ, धाव, एते धातवः।

हियोर्दीर्घः ॥३।१।१४४॥

बुधातोरुकारस्य दीर्घः स्यात् हि-याप्रत्यययोः परयोः । प्रवर्त्तनायामसादित्वाद् याप्रत्यये, बूआ, बूया । बूहि ॥

बोरीः ॥३।१।४५॥

बुधातोर्भूतेऽर्थे ईप्रत्ययः स्यात् । ईंसोरपवादः ॥

आदेरीत्यवो द्विः ॥३।१।४६॥

बुधातोरुकारस्यावादेश आदेर्द्वित्वं च स्यादीप्रत्यये परे । अडागमे, अब्बवी । भोग प्रेक्षणे । अयमापूर्वक एव दृश्यते, आभोएइ, आहोएन्ति आभोएन्ति आहोयन्ति । आहोएहिन्ति । लोल आलोठने । उल्लोलेइ ॥

लोलस्येज्जे ढः ॥१।४।१४१॥

लोलधातोरुपधाया ढकारो वा स्यादिज्जप्रत्यये । उल्लोढिज्ज, उल्लोलेज्ज ॥

लोलस्य स्से ॥१।३।९७॥

लोलधातोर्ह्रस्वः स्यात्स्सप्रत्यये परे । विलुलिस्सइ । वर वरणे । वरयते । वरेमि, वरेमो । उव्वलिज्जा । स्साद् आस्वादने, प्राप्तौ, सम्मतिदाने, विज्ञाने च । स्वार्थे इज्जः । साइज्जइ । साइज्जामो । सायए, साइज्जेज्जा । साइज्जह । साइज्जिस्सामि । आसाएन्ति, आसादेइ, आसादेन्ति, आस्सादेन्ति । आसाएमि, आसाएमो । आसाएहि । आसादेस्सामो, आस्सादेस्सामो ॥

॥ इत्येकारविकरणः करादिगणो द्वितीयः ॥

# अथ वैकल्पिकैकारविकरण आदि-स्तृतीयगणः ॥

अंच पूजायामङ्गसंकोचने च ।

### अंचादिभ्यश्च ॥३।१।१०७॥

अंचादिगणपठितेभ्यो धातुभ्य एप्रत्ययो वा स्याद्भविष्यति चकारात्कृदाज्ञावर्त्तमानेषु । अंचेइ, अंचइ । अज्ज समुपार्जने । अज्जेइ, अज्जइ ॥

### समोऽज्जस्यातस्त्तेंसुमाणेष्विणः ॥३।१।१४५॥

समः परस्याज्जधातोरन्त्यस्याकारस्येणादेशः स्यात् त्ता-इंसु-माण प्रत्ययेषु । समज्जिणिसु । आव प्राप्तौ । पावेइ, पावइ, पाविन्ति, पावन्ति । पावेमि । पाविहिनि, पावेही । पाविहिसि ॥

### पादावस्याउणो वा ॥३।१।१४६॥

पकारोपसर्गात्परस्यावधातोराउण इत्यादेशो वा स्यात् । पाउणाति, पाउणइ, पाउणन्ति । पाउणेज्जा । पाउणिहिनि । संपावेइ, संपाउणन्ति । संपाउणिज्जा, संपाउणेज्जा । संपाविहिइ । संपाउणिस्सामो । इक्ख दर्शने व्यक्तायां वाचि च । परस्वरलोपे, अणुक्खिस्सामि ॥

### पोवाभ्यामिक्खस्येहः ॥३।१।१४७॥

पोवाभ्यामुपसर्गाभ्यां परस्येक्खधातोरिहादेशो वा स्यात् । अणुप्पेहन्ति । अब्भाइक्खइ, अब्भाइक्खन्ति ॥

अवाद्यः ॥३।१।१४८॥

अवोपसर्गात्परस्येक्खधातोरादेर्यकारादेशो वा स्यात् । अवयक्खइ । पक्षे परस्वरलोपे, अवक्खइ, अवयक्खन्ति । अवयक्खसि । अवयक्खह, अवक्खह । अवपेक्खइ । अवपेक्खह । उवेहइ । उवेहे । णिरिक्खइ ॥

पात्खस्य छः ॥३।१।१५०॥

पोपसर्गात्परस्येक्खधातोः खस्य छो वा स्यात् । ह्रस्वविकल्पे, पिच्छइ, पेच्छइ, पेहेइ, पेहेति, पेहइ, पेहति, पेच्छन्ति । पिच्छसि । पेच्छामि । नमादित्वात् । पेच्छिमो । पेहे ॥

आज्ञायां पेहे हस्य हौ ॥३।१।१५२॥

आज्ञार्थे पपूर्वकस्येहस्य हस्य लोपः स्यात् हौ परे । पेहि, पिच्छेह । पडियाइक्खेइ । पच्चुवेक्खेइ । पच्चुवेक्खइ । पच्चुवेक्खह । परिक्खेइ । परिक्खए । संपेहेइ । संपेहइ । संपेहति । संपेहेसि । संपेहेमि । ईर प्रेरणे । ईरइ । ईरन्ति । उदीरन्ति । उदीरेन्ति ॥

उदीरवेदसोभेभ्य इंसोरेदितः ॥३।१।१६७॥

एभ्यो धातुभ्यः परस्येंसुप्रत्ययस्येकारस्यैकारः स्यात् । उदीरेंसु । "उपधायाः" इत्यधिकारे—

पादीरस्य द्वित्वंकणेषु ॥३।१।६४॥

पकारोपसर्गात्परस्येरधातोरुपधाया द्वित्वं स्यात्ति-क-ण-प्रत्ययेषु परेषु । परिपिल्लइ । उस निन्दायाम् ।

आत उसस्य तौवा ॥३।१।८४॥

आकारोपसर्गात्परस्योसधातोरुपधाया द्वित्वं वा स्यात्तौ

परे । आउस्सति, आउसइ । कप्प छेदने सामर्थ्ये उत्पादने च । कप्पइ, कप्पेइ, कप्पेन्ति । पकप्पिन्ति । पकप्पयामो । कह कथने । कहेइ, कहन्ति ॥

कहस्य हौ ॥४।४।३०॥

कहधातोर्यगागमो वा स्यात् हौ परे । कहय । कुणादित्वात्, कहसु, कहाहि, । परिकहेइ, परिकहेन्ति । क्किण क्रयणे । किणेइ । जाणादित्वात् । किणाइ । किणे ॥

वेः क्किण इणस्य येह्योः ॥४।४।९३॥

वेरुपसर्गात्परस्मिन् क्किणधाताविणसमुदायस्य लोपो वा स्याद् यप्रत्यये एकारब्किरणसहितहप्रत्यये च परे । विक्केह । क्खा कथने । खाइ । संयुक्ते ह्रस्वः, खन्ति । अब्भक्खाइ ॥

आतः क्खो घत्रो वा ॥३।१।१५४॥

आकारोपसर्गात्परस्य क्खाधातोर्घवादेशो वा स्यात् । आघवेइ । आघवेज्ज ॥

आघं भूते ॥३।१।१५७॥

आपूर्वकक्खाधातोर्भूतेऽर्थे आघमिति निपात्यते । आघं । पच्चक्खाइ, पच्चक्खन्ति । पच्चक्खाएमि, पच्चक्खामि ॥

इतेज्जयोराहः ॥३।१।१५८॥

आतः परस्य क्खाधातोराहादेशः स्याद् इत-इज्जप्रत्यययोः परयोः । विआहिज्ज । क्खिव प्रेरणे ॥

उन्नेः क्खिवस्य वेः स्से ॥४।४।१००॥

उत्निपूर्वक क्खिवधातोरिकारसहितस्य वस्य लोपः स्या-

स्सप्रत्यये परे। उभिक्खिस्सामि। निक्खिविस्सामि। खुभ संचलने ॥

खुभस्य तौ ॥३।१।७७॥

खुभधातोरुपधाया छित्वं स्यात्तौ परे। खुब्भइ। खुभज्जा। गिण्ह ग्रहणे ॥

गिण्हस्य स्वार्थे ॥१।३।३०॥

गिण्हधातोरिकारस्य वृद्धिर्वा स्यात् स्वार्थे त्यादौ परे। गेण्हइ, गिण्हइ, गेण्हेइ, गिण्हेइ, गेण्हन्ति, गिण्हन्ति। गिण्हामि, गेण्हामो, गिण्हामो। गिण्हे, गिण्हिज्ज, गेण्हेज्ज, गेण्हेज्जा। गिण्ह, गिण्हाहि ॥

गिण्हस्य सस्सस्य केवलस्य घेच्छस्तेरिट् ॥३।१।१६१॥

स्सप्रत्ययसहितस्य गिण्हधातोः केवलस्य घेच्छादेशः स्यात्तेरिडागमः स्यात्। घेच्छिइ। केवलस्य किम्? अभिगिण्हिस्सामि ॥

घेच्छान्मेरीस् वा ॥३।१।१६३॥

घेच्छात्परस्य मिप्रत्ययस्येमादेशो वा स्यात्। घेच्छी, घिच्छामि, घेच्छामि ॥

घेच्छदाहवोच्छेभ्यश्च ॥४।४।७६॥

एभ्यः परस्य मेरन्त्यलोपो वा स्यात्। घेच्छं। गिल उद्गिरणे। उग्गिरेइ। अणुगिलन्ति। चल संचलने। चलइ, चलन्ति, चलेन्ति ॥

पचलजंभाभ्यामायः स्वार्थे ॥३।१।१६४॥

पकारोपसर्गपूर्वकच जधातोर्जंभधातोश्चायप्रत्ययः स्यात् स्वार्थे। पयलायन्ति। पयलाएज्ज। चिट्ठ गतिनिवृत्तौ। चिट्ठइ, चिट्ठेइ, चिट्ठन्ति। चिट्ठामो। चिट्ठेह, चिट्ठह। अणुचिट्ठइ। उवचिट्ठइ। पडिचिट्ठइ॥

समश्चिट्ठस्य खः ॥१।४।१४२॥

संपूर्वकस्य चिट्ठधातोरुपधायाः खकारो वा स्यादेतिमाणप्रत्ययेषु परेषु। संचिक्खइ। संचिट्ठेइ, संचिट्ठइ। संचिक्खे। छिन्द् छेदने॥

अणोणातिन्तित्तात्तुंतारेष्वेदः ॥४।४।१०३॥

छिन्दभिन्दयोरिन्दस्यैद इत्यादेशो वा स्याद् अ-ण-ऊण-ति-न्ति-त्ता-त्तुं-तारप्रत्ययेषु परेषु। छेदेइ, छिन्दइ। छिन्दए। छेदिन्ति। छिन्दे, छिन्देज्जा, छिन्दिज्ज। छिन्द, छिन्दाहि॥

आतश्च्छिन्दाभिन्दयोरिन्दस्यायि ॥४।४।१०१॥

आपूर्वकयोरनयोरिन्दस्य लोपः स्यादेप्रत्यये परे। अच्छे। "अप्पेगे पायमब्भे अप्पेगे पायमच्छे"*। उच्छिन्दसु॥

समुदो हिन्तौ च ॥४।४।१०२॥

समुदः परयोरनयोरिन्दस्य लोपः स्यात् हिन्तिपरे चकारादेपरे। समुच्छे। समुच्छिहिन्ति। जम निवृत्तौ। उज्जमन्ति॥

* अप्येकः पादमाभिन्द्यात् अप्येकः पादमाच्छिन्द्यात्॥ आचा० १-१-२-१६॥

नेर्जमस्य तिन्तित्तासु ॥१।३।६३॥

नेः परस्य जमधातोर्यच्छादेशः स्यात् ति-न्ति-त्ताप्रत्ययेषु परेषु। णियच्छइ, णियच्छन्ति। जय जिण जये। जयइ, जयति। जिणे। जिणेहि, जिणाहि। अयादित्वात्, जइत्था। पराइणइ। कुणादित्वात्, विजयसु। जर वयोहानौ। जरेइ॥

नेर्जराद्वा ॥३।१।१६८॥

निपूर्वकजरधातोः परस्येंसुप्रत्ययस्यादेरेकारो वा। निज्जरिंसु, निज्जरेंसु। ट्ठा गतिनिवृत्तौ। ठाइ। अब्भुट्ठेइ, अब्भुट्ठेन्ति। अब्भुट्ठेमि, अब्भुट्ठामो॥

ट्ठश्च ॥१।३।६८॥

ट्ठाधातोर्ह्रस्वोऽन्तादेशो वा स्यात्। अहिट्ठइ, अहिट्ठेइ॥

एतष्ठः ॥३।१।२४॥

ट्ठाधातोः परस्यैप्रत्ययस्येडागमो वा स्यात्। अहिट्ठिए, अहिट्ठए। तव सन्तापे। तवेइ, तवइ, तवेन्ति, तवन्ति। तवइस्सन्ति। आयावयन्ति। आयाविज्जा। आयावेहि। ध्वंस नाशने। धंसइ॥

अभेर्ध्वंसस्येज्जे ॥१।३।२६॥

अभेः परस्य ध्वंसधातोरादेर्लोपः स्यादिज्जे परे। समभिधंसेज्जा। धा धारणे पोषणे च। धकारस्य हकारे, निहे॥

अपेरेति धि ॥१।३।६६॥

अपेरेकारोऽन्तादेशः स्यादेविकरणसहितनिप्रत्ययान्त-

धाधातौ परे। पडिपेहेइ ॥

एतिणेषु समो धो ह्रस्वः॥३।१।१६५॥

समः परस्य धाधातोराकारस्य ह्रस्वो वा स्याद् ए-ति-ण-प्रत्ययेषु परेषु। पडिसंधए। पडिसंधाएज्जा ॥

परेर्धस्तेः ॥३।१।२४॥

परिपूर्वकधाधातोः परस्य तिप्रत्ययस्येडागमः स्यात्। एविकरणे, परिहेइ। विकरणाभावे इटि, परिहिइ। परिहिस्सामि, विहिस्सामो। संधेज्जा ॥

समो धस्तेः ॥४।४।४४॥

समः परस्माद्धाधातोर्विहितस्य तिप्रत्ययस्य याडागमो वा स्यात्। संधयाति, संधति। "हासं पि णो संधति पावधम्मे"[1]। एविकरणे ह्रस्वे, संधिस्सामि। धोव शुद्धौ ॥

धोवस्य यः ॥१।४।१४३॥

धोवधातोर्वकारस्य यकारो वा स्याद् अ-ति-न्त-इज्ज-ण-प्रत्ययेषु परेषु। धोयइ, धोवेइ, धोवइ, धोवन्ति। धोवेमि ॥

एति धोवस्य ॥३।१।१६६॥

धोवधातोरोकारस्य ह्रस्वः स्यादेप्रत्यये परे। धुवे, धोवेज्जा, धोएज्जा। पहोइज्ज, पधोएज्ज। ञव ज्ञापने ॥

आतो ञवस्य नित्यम् ॥१।२।२८॥

आकारात्परस्य ञवधातोरादेर्लोपो नित्यम्। संयुक्ते ह्रस्वस्यापवादः। आणवेइ, आणवइ। गिलादित्वात्, आण-

[1] हास्यमपि संधत्ते (संदधाति) पापधर्माणि। (सूय० १-१४-२१)

बयन्ति। पास दर्शने॥

## तिहिलोपमिहमाणेषु पासस्य ॥३।१।८६॥

पासधातोरुपधाया द्वित्वं वा स्यादेषु परेषु। संयुक्ते ह्रस्वः पस्सइ, पासेइ, पासइ, पासति, पासन्ति। पस्सामि, पासामि, पासेमि, पासामो। पासए, पासेज्ज, पासेज्जा, पासेज्जासि। पासउ, पासतु। पस्स, पास, पस्सह, पासह। पासिहिति। पासिहिसि। पीड पील बाधायाम्। पीडइ, पीडेइ, पीडइ। पीडामि। पीडे। पीलेइ। पीलिज्जा, पीलेज्जा। आवीलेइ। आवीलए, आवीलेज्जा। उव्वीलेति। पवीलिज्जा। भंस अधःपतने॥

## भंसस्य केवलस्य तौ ॥३।१।८७

केवलस्य भंसधातोरुपधाया द्वित्वं वा स्यात्तौ परे। भस्सइ, भंसेइ, भंसइ। भंसेज्जा॥

## परेर्भंसस्य तौ ॥३।१।८१॥

परेरुपसर्गात्परस्य भंसधातोरुपधाया द्वित्वं स्यात्तौ परे, परिभस्सइ। भास भाषणे॥

## पाद्भासात्से: ॥३।१।५१॥

पकारोपसर्गकभासधातोः परस्य सिप्रत्ययस्यैकारोऽन्तादेशो वा स्यात्। पभाससे, पभाससि। मिला म्लाने। मिलायइ, मिलाएइ, मिलाइ, मिलायन्ति, पमिलायइ, पमिलाइ, पमिलायन्ति। परिमिलायन्ति। मुंच मोचने॥

मुंचस्य तिन्तिमिच्छिखणत्तुंतूणेषु ॥१।३।३१॥

मुंचधातोरुकारस्य वृद्धिर्वा स्यादेषु परेषु॥

मुंचस्य येऽनुस्वारस्य ॥४।४।१०५॥

अस्य धातोरनुस्वारस्य लोपः स्याद् यकारे परे। मुयइ, मोएइ, मुयति, मोएन्ति, मोयन्ति, मुंचन्ति। मुंचामि, मोएमि। मुंच, मुय, कुणादित्वात्, मुंचसु मुयह॥

मुंचसुणाभ्यां च्छिट् तौ ॥३।१।१९॥

आभ्यां भविष्यदर्थे च्छिट्प्रत्ययः स्यात् तौ परे। हि-स्सयोरपवादः। मोच्छिइ। रज्ज रागे। रज्जइ॥

उमिज्जयोर्जयोर्यः ॥३।२।२२॥

अस्य धातोर्जकारयोर्यकारः स्यादिज्जप्रत्यये परे उमिप्रत्यये च। रइज्ज, रएज्ज। रुह प्रादुर्भावे॥

आतो रुहस्य भस्तौ ॥१।४।१४४॥

आतः परस्य रुहधातोरुपधाया भकारो वा स्यात्तौपरे॥

आतो रुहस्य तित्ताकेषु ॥१।३।३२॥

आतः परस्य रुहधातोरुकारस्य वृद्धिर्वा ति-त्ता-कप्रत्ययेषु। आरूभेइ, आरुभइ। आरोहइ, आरूहेइ, आरुहइ॥

दोरुहस्योतो दीर्घः ॥१।३।१००॥

दोरुपसर्गात्परस्य रुहधातोरुकारस्य दीर्घो वा स्यात्। दुरूहइ, दुरुहइ, दुरूहेइ, दुरुहेइ, दुरूहन्ति, दुरुहन्ति। दुरूहामि, दुरुहामि। दुरूहेह, दुरुहेह॥

## ओतस्त्तच ॥१।४।१४५॥

ओतः परस्य रुहधातोरुपधाया भकारः स्यात्ताप्रत्यये चान्तिप्रत्यये। पचोरुभइ, पचोरुहेइ, पचोरुहइ, पचोरुहन्ति। वत्त वर्त्तने॥

## तस्य टो वा वत्तस्य ॥३।१।१७०॥

वत्तस्य तस्य टो वा स्यात्। वट्टइ, वत्तेइ, वत्तेति, वत्तंति, वट्टन्ति। वत्तेह। वट्टिस्संति। वत्तइस्सामि, वत्तिहामि। वट्टिंसु। उव्वट्टेइ, उव्वत्तेइ। उव्वट्टेज्ज। उव्वट्टिस्सन्ति। उव्वट्टिंसु। उयवट्टइ॥

## उपसर्गाद्वस्य यः ॥३।१।१७१॥

उपसर्गात्परस्य वत्तधातोर्वस्य यो वा स्यात्। अणुपरियट्टइ। अणुपरियट्टिज्जा। अणुपरियट्टिस्सइ। नियट्टन्ति। तुयट्टइ, तुयट्टेइ, तुयट्टन्ति, तुअट्टन्ति। तुयट्टामो। तुयट्टेज्ज, तुअट्टेज्जा। तुयट्टेह। तुयट्टिस्सामो। पयट्टेइ। पवत्तइ। पयट्टन्ति। पयट्टिंसु। पडिणियत्तइ, पडिणियत्तन्ति॥

## आतस्तेंसुणेषूस् ॥३।१।१७३॥

आकारोपसर्गात्परस्य वत्तधातोर्वस्योसादेशः स्यात् त-इंसु-णप्रत्ययेषु। समाउट्टिंसु। वद् व्यक्तायां वाचि। वदइ, वदति, वयइ, वयति, वदेइ, वएइ, वयन्ति। वदसि, वयसि। वयामि, वयामो। वदे, वए, वइज्ज, वएज्जा। वयाहि, वदह, वयह। वदिहिति, वदिहिन्ति, वदेहिन्ति, वदिस्सन्ति, वइस्सन्ति। वइस्सामो॥

वदादासी: ॥३।१।४७॥

वद्धातोरासीप्रत्ययः स्याद्भूतेऽर्थे। वदासी, वयासी। वेद वेदने। वेएइ, वेदेति, वेयइ, वेएइ, वेदयन्ति, वेदेन्ति, वेयन्ति। सव निर्झरणे गर्भविमोचने च। सवइ। अभिणिस्सवइ, अभिणिस्सवेन्ति॥

आयाभ्यां सवस्य ण्हो निर्झरणे वा ॥३।१।१७५॥

आभ्यां परस्य सवधातो ण्हादेशो वा स्यात्त्यादौ परे निर्झरणेऽर्थे। अण्हाति। ऊसवेइ। उस्सवेह। ऊसवेह। पसवइ। पसवन्ति। पसवामि। पज्जोसवेइ। साह कथने साधने सद्गमने शासने च। साहेइ, साहइ, साहति, साहयति, साहयइ। साहे, साहए, साहिज्जा, साहिज्जासि। साहिस्सं॥

साहहंदाभ्यां डिस् ॥३।१।१५॥

आज्ञायां साहहंदधात्वोः परस्य सिप्रत्ययस्य डिसादेशः स्यात्। पसाहि। सुण श्रवणे। सुणेइ, सुणेति, सुणइ, सुणन्ति। सुणेमि। नमादित्वात्, सुणिमो। सुणेहि, सुणेह, सुणाह॥

सुणस्य सोच्छिः ॥३।१।१६२॥

सुणधातोः स्सप्रत्ययसहितस्य सोच्छि इत्यादेशो वा स्यात्। सोच्छिइ। सुणेस्सामो। हर हरणे। हराहि। हरेज्जा। अवहरइ। अवहरिंसु। आहरेइ। आहरेमि, आहारेमि। आहारिज्जा। आहारे। उद्धरेमि। नमादित्वात्, उद्धरिमो। उदाहरे, उयाहरे। उदाहरिस्सामि। णिहरइ,

निहरेइ, नीहरति । पडिसाहरति । पच्चुद्धरिस्सामि । परिहरेइ । विहरइ, विहरेइ । विहरिज्जामि ॥

॥ इति वैकल्पिकैकारविकरणाश्चादिस्तृतीयगणः ॥



# अथ प्रेरणाप्रत्ययान्ताः क्रिया ॥

## प्रेरणायामाव: ॥३।२।१॥

धातुभ्यः स्वार्थप्रयोजकव्यापाररूपप्रेरणार्थे आवप्रत्ययः स्यात्त्यादिप्रत्यये परे । अंछावेइ । अज्झावेइ ॥

## अहेरेरावन्तावयः ॥३।२।२३॥

अहेरुपसर्गात्परस्येधातोरयादेशः स्यात् न्तिपरकावप्रत्यये । अज्झयाविन्ति ॥

## पात्कडात्सर्वस्य ॥४।४।१०७॥

पपूर्वकात्कडधातोः परस्यावप्रत्ययस्य सर्वस्य लोपः स्यात् । पयडेमि । पयडसु ॥

## आवश्च करादिभ्यः ॥३।२।३॥

करादिधातुभ्यः प्रेरणायामावप्रत्ययश्चकारादादिस्वरस्य वृद्धिः पर्यायेण स्यात् ॥

## करगलोज्जलपज्जलविहडानामावे वा ॥३।२।४॥

एषामादिस्वरस्य वृद्धिर्वा स्यादावप्रत्यये ॥

* कर, गल, उ-जल, प-जल, भम, वम, परि-वस, वि-हड, एते-करादयः ॥

### करादावस्यातः ॥४।४।१०६॥

करधातोः परस्यावप्रत्ययस्यादेराकारस्य लोपो वा स्यात् । प्रेरणार्थकप्रत्ययसहितस्य करादित्वादेप्रत्ययः। कारावेइ, करावेइ, कारेइ, कारवेइ । कारवेमि । कारवे । कारावेह, कारवेह, कारेह । उवक्खडावेइ, उवक्खडाविन्ति । उवक्खडावेहि, उवक्खडावेह । पडियारेह । पुक्कारेन्ति । सक्कारइ, सक्कारेइ, सक्कारेन्ति, सक्कारेन्ति । सक्कारेमि, सक्कारेमो । सक्कारए, सक्कारिज्जा । सक्कारेहि । सक्कारेहिन्ति ॥

### कुप्पस्य पयोरिते च वः ॥३।२।५॥

कुप्पधातोरितप्रत्यये चकारात्प्रेरणार्थे पद्वयस्य वः स्यात्। कोवए, कोवइज्जा। खेश्रावेइ ॥

### पाक्खिवस्य च्छः ॥३।२।६॥

पकारोपसर्गात्परस्य क्खिवधातोः प्रेरणायां च्छादेशो वा स्यात् । पच्छावेइ । पक्खिवावेइ ॥

### खमादीनामादेर्वृद्धिः ॥३।२।२॥

प्रेरणार्थे खमादीनामादिस्वरस्य वृद्धिः स्यात् । आवस्यापवादः । खामेइ । खोमेइ ॥

---

* खम, सम्-कम, किलिस्स, किलेस, कुप्प, क्खिव, खुभ, गल, आ-गस, गह, उद्-वड, सम्-वड, चर, चल, निग्-जम, उद्-जोय, वि-ज्झाम, तर, तव, तुस, त्तस, दिस, नद, नम, नस्स, उद्-पज्ज, उव-पज्ज, निग्-पज्ज, सं-पडि-पज्ज, पड, फुड, बुज्झ, परि-भज, सम्-भर, भव, मर, लभ, लव, लुभ, आ-लोक, आ-लिप, अभि-वंद, वड्ढ, वद, वम, वर, वव, वह, निग्-वह, वि-वह, सम्-वह, विस, अणु प्प-विस वीय,,

छ्छोलादिभ्यो यः ॥३।२।१६॥

एभ्यः प्रेरणार्थे यप्रत्ययश्च स्यात् । उच्छोलयति ॥

आवे जादीनामेकादेशस्य ह्रस्वः ॥३।२।७॥

आदिगणपठितानामावप्रत्यये परे एकादेशस्याकारस्य ह्रस्वो वा स्यात् । जवेन्ति, जाविन्ति, जावेन्ति ॥

उज्जोयज्झामयोर्वलोपौ ॥३।२।३२॥

अनयोरुपधाया वकारलोपो वा स्यातां प्रेरणायाम् । उज्जोएइ, उज्जोवेइ ॥

ज्झामस्येज्जे ॥३।२।८॥

ज्झामधातोराकारस्य ह्रस्वो वा स्यादिज्जे परे । विज्झाएज्जा, विज्झवेज्ज, विज्झविज्जा । उवट्टावेइ । उवट्टाविन्ति । उवट्टावएज्जा । उवट्टावेह । पट्टावेज्जा । तोसइ । अभितोसइज्जा । निहावए । परिहावेइ ॥

समो नद्धस्य दधयोर्हः ॥३।२।९॥

समः परस्य नद्धधातोर्दकारधकारयोर्हकारः स्यात्प्रेरणा-

---

व्यय, पडि-सड, आ-सद, प-सद, सद, उव-सम, ओ सम, नि-सम, वी-सम, सर, आ-सर, ओ-सर, प-सर, पडि-सर, सव, सिक्ख, सिव्व, निसीय, सुज्झ, वि-सुय, सेह, सोय, आ-स्सस, वि-स्सस, प-हस, सम्-प्पो-हण, आ-हर, णिर्-हर, प-हर, हा, एते, खमादयः ॥

---

+ च्छोल, नव, पीस, फुट्ट, रज, रम, लूस, वर, विस, सर, हर, एते च्छोलादयः ॥

---

* जा, दा, न्हा, मंड, मा, निर्-वा, लुभ एते जादयः ॥

याम् । सण्णाहेइ, सण्णाहेइ, सण्णाहेन्ति ॥

नस्से दीर्घात् ॥१।२।२९॥

न[illegible]सम्बन्धिनो दीर्घात्परस्य संयुक्तस्यादेर्लोपः स्यात् । नासिज्जा । पणासेइ । उवाइणावेइ, उवाइणावेति ॥

न्हो ण आवस्य ॥३।२।३३॥

न्हाधातोः परस्यावस्योपधाया णकारो वा स्यात् । ण्हावेइ, ण्हाणेन्ति, ण्हावेन्ति । ण्हाणेत्त ॥

पज्जस्य पयः ॥३।२।१०॥

पज्जधातोः पयादेशः प्रेरणायामर्थे । उप्पाएइ, उप्पाएन्ति । उप्पाएज्जा । विवाएमि । पाडेइ । पाडेसि ॥

उपसर्गात्पडस्य तः ॥३।२।३४॥

उपसर्गात्परस्य पडधातोरुपधायास्तकारादेशः स्यात्प्रेरणायाम् । अइवाइज्ज ॥

नेर्वा ॥३।२।३५॥

नेः परस्य पडधातोरुपधायास्तकारादेशो वा स्यात्प्रेरणायाम् । निवायए, [illegible], निवातएज्जा ॥

पात्र ॥ ३।२।३६॥

पकारोपसर्गात्परस्य पडधातोरुपधायास्तकारादेशो न स्यात् । पवाडेइ, पडिवायन्ति ॥

पो डजिः ॥३।२।१४॥

पाधातोर्डजिप्रत्ययो वा स्यात्प्रेरणायामर्थे । पज्जेइ, पज्जेन्ति पियावए, इत्यादि ॥

एन्तहिष्विर्डजेः ॥३।२।१५॥

ए-न्त-हिप्रत्ययेषु परेषु डजिप्रत्ययस्यादेरिकारः स्यात् । पिज्जे । पिज्जाहि । फांडेन्ति । पीहावेइ ॥

वीहस्येज्जे भेसः सावस्य ॥३।२।१६॥

प्रेरणायामावसहितस्य वीहधातोर्भेसादेशः स्यादिज्जप्रत्यये । भेसेज्जा । वोहेइ, वोहेन्ति । वोहेहि । पडिवोहेइ, पडिवोहइज्जा ॥

भमाडुः ॥३।२।३७॥

भमधातोः परस्यावस्योपधाया डः स्यात् । भमाडेइ । भमाडेसु ॥

भुंजस्य भोयो वा ॥३।२।१७॥

प्रेरणायामर्थे भुंजधातोर्भोयादेशो वा स्यात् । भोयावेइ । भुंजावेइ । भोयावेज्जा, भोयए ॥

पान्मुंचात्ससस्य खड् ॥३।२।१८॥

पकारोपसर्गात्परस्मान्मुञ्चधातोः परस्य ससस्य खड् स्यात्प्रेरणायाम् । पमुक्खसि ॥

रज्जस्येते च रंजः ॥३।२।२०॥

रज्जधातो रंजादेशः स्यादिते परे चात्प्रेरणायाम् । रंजयन्ति ॥

रुहस्य वः ॥३।२।३८॥

रुहधातोरुपधाया वकारादेशः स्यात्प्रेरणायाम् । रोवावेइ । ववरोवेइ, ववरोवेति, ववरोवेन्ति । ववरोवेमो । ववरोवेज्जा । ववरोवेह । लूसयन्ति ॥

वड्ढस्य धो णमाणयोश्च ॥३।२।३६॥

अस्योपधाया धकारो वा स्यात् णमाणयोः परयोश्चात्प्रेरणायाम् । वद्धावेइ, वद्धावन्ति, वद्धाविन्ति, वद्धावेन्ति । वद्धावेहि । अणुप्पवेसेइ । अभिनिवेसए । णिवेसइ, णिवेसन्ति । निवेसेइ, निवेसयन्ति । उपधाया इत्यधिकृत्य,

व्वयस्य वः ॥३।२।३२॥

व्वयधातोरुपधाया वकारादेशः स्यात्प्रेरणायाम् । पव्वावेइ । पव्वावेज्ज । सारयति, सारयन्ति ॥

ओ च सुज्झस्य सोहः ॥३।२।१३॥

प्रेरणार्थे इप्रत्यये च सुज्झधातोः सोहादेशः स्यात् । सोहेइ । विसोहेइ । विसोहेमि । विसोहिज्ज, विसाहेज्ज, विसोहेज्जा, विसोहए । आसासेइ, आसासन्ति ॥

आज्ञायामातः स्ससात्सेर्डिस् ॥३।२।३०॥

आज्ञायामाकारात्परस्य स्ससधातोः सिप्रत्ययस्य डिसादेशः स्यात् । अस्सासि, आसासि ॥

॥ इति प्रेरणाप्रत्ययान्तप्रक्रिया ॥

# अथ क्रियासमभिहारप्रक्रिया ॥

व्यञ्जनादेर्द्विः क्रियासमभिहारे ॥३।१।१७६॥

व्यञ्जनादिकस्य धातोः क्रियायाः पौनःपुन्येऽतिशये वा द्योत्ये उपधाया द्वित्वं स्यात् ॥

आदेः सस्वरस्य ॥३।१।१७७॥

उक्तार्थे धातोः सस्वरस्यादेर्व्यञ्जनस्य द्वित्वं स्यात् ॥

द्विरुक्तस्यादेर्वृद्धिः ॥३।१।१७८॥

तस्मिन्नर्थे द्विरुक्तस्यादिस्वरस्य वृद्धिः स्यात् ॥

लवस्य पो बहुलम् ॥३।१।१७९॥

लवधातोर्वस्य पो बहुलं स्यात् । लालप्पमाणो। खोखु-ब्भमाणो । जागाई ॥

क्रमस्य चंकमः ॥३।१।१८०॥

उक्तेऽर्थे क्रमधातोश्चंकम इत्यादेशः स्यात् । चंकमन्तो । चंकम्ममाणो । चंकमिया चङ्क्रम्येत्यर्थः ॥

॥ इति क्रियासमभिहारप्रक्रिया ॥

# अथ नामधातुप्रकरणम् ॥

आयस्तत्करोति ॥३।१।१८१॥

द्वितीयान्तान्नाम्नः करोतीत्यर्थे आयप्रत्ययः स्यात् ॥

आयान्ताश्च ॥१।१।१५॥

आयादिप्रत्ययान्ता धातुसंज्ञाः स्युः । अत्ताणं उस्सुयं करेति=उस्सुयायति ॥

अस्सुयान्माण आयस्य ॥४।४।१०८॥

उस्सुयशब्दात्परस्यायप्रत्ययस्य लोपः स्यान्माणप्रत्यये । उस्सुयमाणो ॥

अनुकरणधवलादिभ्यश्च ॥४।४।१०९॥

अनुकरणशब्दाद्धवलादिभ्यश्च परस्यायप्रत्ययस्य लोपः

* धवल, झलहल, तंडय, तणु, दीह, पंसुल, पवित्त, पीण, मइल, वि-अंग, विउस, सिढ़िल, एते धवलादयः ॥

स्यात्। धवलइ। झलहलइ। कहकहति, कहकहन्ति। आ-यप्रत्ययान्तानां केषाञ्चित्करादित्वादेप्रत्यये, टिट्टियावेइ। तंडवेन्ति। तणुएन्ति। थक्कारेन्ति॥

पंसुलादिभ्याष्टेमन्तार्थयोश्च ॥४।४।११०॥

एभ्यः परस्य [illegible]यार्थकप्रत्ययस्य टेश्च लोपश्चका-रादायस्य लोपः। पंसुलं करोति=पंसेइ॥

पवित्तस्य न्ते ॥४।४।२०॥

अस्य यगागमः स्यात् न्तप्रत्यये परे। पवित्तयन्तो॥

ममाच्च ॥४।४।११२॥

अस्मात्परस्यायप्रत्ययस्य लोपो न स्यात्। ममायए, ममा-यन्ति॥

मिसिमिसेर्माणे दीर्घश्च ॥४।४।२१॥

अस्य माणप्रत्यये परे दीर्घोऽन्तादेशश्चकाराद् यगागमो वा स्यात्। मिसिमिसीयमाणो, मिसिमिसेमाणो, मिसिमि-सिमाणो॥

उपमानादाचारे ॥३।१।१८२॥

उपमानवाचकाच्छब्दाद् आचारेऽर्थे आयप्रत्ययः स्यात्। विज्झायन्ति॥

आये विज्जोर्विज्जुयो वा ॥३।१।१८३॥

विज्जुशब्दस्यायप्रत्यये परे विज्जुय इत्यादेशो वा स्यात्। विज्जुयायन्ति॥

### विउसस्य द्विः सस्य ॥३।१।१८४॥

विउसशब्दस्य सकारस्य द्वित्वं स्यादायप्रत्यये परे। विउस्सन्ति ॥

### धुत्तादारः ॥३।१।१८५॥

धुत्तशब्दादुक्तेऽर्थे आरप्रत्ययः स्यात्। धुत्तारसि ॥

॥ इति नामधातुप्रकरणम् ॥

## अथ भावकर्म्मप्रक्रिया ॥

### भावकर्म्मणोरिज्जः ॥३।२।४०॥

भावकर्म्मवाचकत्यादिप्रत्यये परे धातोरिज्जप्रत्ययः स्यात्। वि+अंज=वंजिज्जइ। अच्चिज्जइ ॥

### क्रिणादीनामादिरहितानामिज्जे लोपः ॥३।२।४६॥

क्रिणादिगणपठितानामादिवर्जितानां लोपः स्यादिज्जप्रत्यये भावकर्म्मणोः ॥

### कत्तादिभ्योऽत् ॥३।२।४१॥

कत्तादिगणपठितेभ्यो धातुभ्यो भावे कर्माणि चात्प्रत्ययः स्यात् ॥

* क्रिण, कर, प-कर, जिण, छिन्द, पर-जिण, भिद, मर, एते क्रिणादयः ॥

× कत्त, कर, क्लिव, अधि-गम, गिरह, घस, चंकम, च्छण, जिण, जुंज, डह, त्थुग, नं-दिस, दव, दह, धरिस, धुण, नस्स, पूर, बंध, भण, भज, भुंज, मुंच, रंभ, रुंभ, लिह, लुंप, लोक, वच, वह, सिच, सुण, हण, हर, हस, एते कत्तादयः ॥

करस्य वा ॥३।२।५०॥

करधातोरिकारोऽन्तादेशो वा स्यादति परे ॥

करहरदिसानामीरादेः स्वरस्य ॥३।२।५१॥

एषामादेः स्वरस्येकारो वा स्यादति परे ॥

इः कत्ता-गिण्ह-डह-दृह-वहानामति ॥३।२।४६॥

एषामिकारोऽन्तादेशः स्यादति परे । किचइ, किचन्ति ॥

कराद्वा ॥३।२।४२॥

करधातोः कर्मणि विकल्पेनाप्रत्ययः स्यात्त्यादौ । किज्जइ, कज्जइ, कज्जति । कीरइ । किज्जन्ति, कज्जन्ति, कीरन्ति । कीरए । किज्जउ । कज्जिस्सइ । धिक्कारिज्जइ । किज्जन्तु । आहिज्जइ, आहिज्जन्ति, आघविज्जन्ति ॥ उपधाया इत्यधिकृत्य,

क्खिवस्य पोऽडयोः ॥३।२।६५॥

अस्योपधायाः पकारः स्यादति प्रत्यये डप्रत्यये च । खिप्पइ । खिप्पउ ॥

स्वाञ्चादुहाभ्य इज्जस्य ॥३।२।५५॥

एभ्यः परस्येज्जप्रत्ययस्यादेर्लोपः स्यात् । खज्जइ ॥

गमादीनामति द्विः ॥३।२।६६॥

एषामुपधाया द्वित्वं स्यादप्रत्यये । अधिगम्मइ ॥

---

* गम क्खिव, चंकम, चङ्कण, जिण, जुंज, डह, त्थुण, दह, दिस, धम, धुण, बंध, भग, भज, भुंज, मुंच, रंभ, लभ, लंभ, लिप, लुप, लोक, वह, सिंच, सुण, हण, हस, एते गमादयः ॥

गादिभ्यो यः ॥३।२।४३॥

एभ्यः कर्मणि यप्रत्ययो वा स्यात् । पक्षे इज्जप्रत्ययः ॥

गाधाहां ये ॥३।२।५२॥

एषामीकारः स्याद्यप्रत्यये परे । उवगीयमाणो ॥

गिण्हस्य घेप्पः ॥३।२।५४॥

गिण्हधातोर्घेप्पादेशः स्यादप्रत्यये । ह्रस्वविकल्पात्, घिप्पइ, घेप्पइ । घेप्पेज्ज ॥

अभिघट्टादियः ॥३।२।४४॥

अभिपूर्वकघट्टधातोरियप्रत्ययः स्यादुक्तेऽर्थे । अभिघट्टियमाणो ॥

घसादण् ॥३।२।४५॥

अस्मादुक्तेऽर्थेऽणप्रत्ययः स्यात् । घासति, चिज्जन्ति । अवचिज्जन्ति । संचिज्जन्ति । छिज्जइ, छिज्जन्ति । छिज्जेज्ज । कादित्वात्, छिज्जिही । वोच्छिज्जिहिन्ति ॥

जिणान्मः प्रवर्त्तनायाम् ॥३।२।५६॥

प्रवर्त्तनार्थे जिणधातोरम्प्रत्ययः स्यात्कर्मणि । एदिज्जयोरपवादः ॥

जिणस्य चः ॥३।२।६७॥

जिणधातोरुपधायाश्चकारः स्यादप्रत्यये । जिच्चं । "कह-

---

+ गा, लक्ख, धा, ला, हा, एते गादयः ॥

---

* कथं नु जीयेतेदृक्षं (जीयते ईदृक्षः) जीवमानो न संवि (उत्त० ७-२२) ॥

णु जिव्वमेलिक्खं, जिव्वमाणो न संविदे"। उज्झइ, उज्झन्ति। उज्झेज्ज। उज्झिहो॥

तरस्य वा ॥३।२।४८॥

तरधातोरादिवर्जितस्य लोपो वा स्यादिज्जे। तिज्जइ। तरिज्जइ॥

त्थुणधुणसुणानां वः ॥३।२।६८॥

त्थुणधुणसुणधातूनामुपधाया वकारादेशः स्यादकारे प्रत्यये। थुव्वइ॥

ह्वस्य दुयः ॥३।२।५७॥

अस्य धातोर्दुयादेशः स्यादप्रत्यये। दुयए॥

धरिसस्य धासः ॥३।२।५८॥

अस्य धास इत्यादेशः स्यादप्रत्यये। धासति। धुव्वए। पण्णायइ, पण्णायति, पण्णायन्ति। पक्षे, णज्जइ, नज्जइ, नज्जए॥

इज्जे दीर्घः फासस्य ॥३।२।५९॥

फासधातोर्दीर्घोऽन्तादेशः स्यादिज्जे परे। फासाइज्जमाणो॥

बंधस्य झः ॥३।२।६९॥

बन्धधातोरुपधाया झकारादेशः स्यादप्रत्यये। बज्झइ, बज्झन्ति। भज्जइ, भण्णइ, भण्णति। भिज्जइ, भिज्जन्ति॥

उदोपडिभ्यो मो मिणः ॥३।२।६०॥

उद्-ओ-पडिभ्यो माधातोर्मिणादेशः स्यादिज्जे। उम्मिणिज्जइ। ओमिणिज्जइ। पडिमिणिज्जइ॥

लक्खाद्यस्येट् ॥३।२।६२॥

लक्खधातोः परस्य यप्रत्ययस्येडागमः स्यात्। लक्खि-ज्जइ।लक्खिज्जसि॥

न्तेर्लभादेः ॥३।२।७०॥

लभधातोः परस्य न्तिप्रत्ययस्यैकारान्तादेशः स्यात्कर्म्म-णि। उवलब्भन्ते॥

वस्योसतयोर्वच्चस्य ॥३।२।६३॥

वच्चधातोर्वस्योसादेशो वा स्यादप्रत्ययतप्रत्यययोः। पक्षे,

आदेरस्य॥३।२।६४॥

वच्चधातोरादेरस्योकारः स्यादप्रत्ययतप्रत्यययोः उच्चइ, उच्चति, उच्चए। वुच्चइ, वुच्चति, वुच्चए, वुच्चन्ति। पवुच्चइ। सुव्वइ, सुव्वन्ति॥

हणस्य मः ॥३।२।७१॥

हणधातोरुपधाया मकारादेशः स्यादप्रत्यये। उवहम्मइ, उवहम्मन्ति। पडिहम्मति। पडिहम्मिहिति, पडिहम्मिस्सइ। विहम्मासि। विणिहम्मन्ति, अवहीरन्ति, अवहीरेन्ति। पहरिज्जइ। पहीयए। हुज्जामि॥

॥इति भावकर्मप्रक्रिया॥

इति श्रीलोङ्कागच्छान्तर्गतलिम्बडीसंप्रदायतिल-
कायमानपूज्यपादश्रीगुलाबचन्द्रजित्स्वामिच-
रणाम्बुजचञ्चरीकमुनिश्रीरत्नचन्द्र-
विरचितायां जैनसिद्धान्तकौ-
मुद्यामाख्यातप्रक्रिया
समाप्ता॥

# अथ कृदन्ते सम्बन्धार्थप्रक्रिया ॥

## कृत् ॥३।३।१॥

धात्वधिकारे वक्ष्यमाणाः प्रत्ययाः कृत्संज्ञाः स्युः ॥

## कर्त्तुरैक्ये पूर्वकाले त्तात्तूमूणेयाः ॥३।३।२॥

क्रिययोः कर्त्तुरभेदे पूर्वकाले वर्त्तमानाद्धातोस्त्ता-त्तु-उं-ऊण-इय-एते प्रत्ययाः स्युः। एकारविकरणे संयुक्ते ह्रस्वविकल्पे च, करित्ता, करेत्ता। कराविऊण, काराविऊण, करिय। गहिउं। चइत्तु ॥ उपधाया इत्यधिकृत्य,

## कारवस्य यो वा त्तान्तयोः॥३।३।५७॥

प्रेरणार्थकप्रत्ययविशिष्टकरधातोरुपधाया वकारस्य यकारो वा स्यात् त्तान्तप्रत्यययोः। कारयित्ता ॥

## पाउकरादेः ॥३।३।३॥

पाउपूर्वकात्करधातोस्त्तादिविषये एप्रत्ययः स्यात्। पाउकरे प्रादुष्कृत्येत्यर्थः ॥

## अञ्जस्य त्ति णक् ॥४।४।४२॥

अञ्जधातोस्त्ताप्रत्यये परे णागामः स्यात्। अञ्जणित्ता। संपूर्वकस्येणादेशो, समञ्जिणित्ता ॥

## उपसर्गाड्डो वा ॥३।३।४॥

उपसर्गपूर्वकाद्धातोरुक्तेऽर्थे डप्रत्ययो वा स्यात् ॥

## इप्रभृतिभ्यश्च ॥३।३।५॥

इप्रभृतिभ्यो धातुभ्योऽपि डप्रत्ययः स्यादुक्तेऽर्थे ॥

---

* इ, का, गिण्ह, चय, जय-यागे, छिद, हा, दा, ना, चि, भिद, भुंज, वच, सु, सुण, हर, हा, एते इप्रभृतयः।

## इकाट्ठादाण्णाबुसुहाभ्यश्चिडुस्य ॥४।४।४५॥

एभ्यः परस्य डुप्रत्ययस्य चिडागमः स्यात् । इच्चा ॥

## अतेरेयों ड ॥३।३।६॥

अतिपरस्येधातोर्यकारादेशः स्याद् डुप्रत्यये । अइयच्च । पडियच्च । अहीउं, अहिज्जिउं, अहित्ता, अहिज्जिऊण, अहिज्ज, अहिज्जित्ता ॥

## पडेरेकादेशस्योत् ॥३।३।७॥

पडेरुपसर्गस्येधातोश्चैकादेशभूतेकारस्योकारः स्याड्डुप्रत्यये । पडुच्च ॥

## पतेर्दीर्घस्त्त इट् ॥३।३।८॥

पतिपूर्वकस्येधातोर्दीर्घः स्यात् त्ताप्रत्ययस्येडागमश्च । पत्तियाइत्ता । पेच्च, पेच्चा । समिच्चा, समेच्च । समुविच्च ।

## पेसादेरियस्यादितः ॥३।३।१०॥

पेसादिगणपठितेभ्यो धातुभ्यः परस्येयप्रत्ययावयवस्येकारस्याकारः स्यात् । प+इस=पेसाय । जहाय । विप्पजहाय । आगाय । समुदाय । पडिसंधाय । विनिधाय । गहाय । आघायाय ॥

## पेहादिभ्यो यस्यैत् ॥३।३।११॥

एभ्यः परस्येयप्रत्ययस्य यस्यैकारो वा स्यात् । पेहाए,

+ प इस, प-इक्ख, गह, घात, जहा, वि-प्प-जहा, आ-दा, सम्-उ-दा, पडि-सम धा, वि-नि-धा, एते पेसादयः ।

* प-ईह, प सार, णि-स्सस, एते पेहादयः ॥

पेहाय । संपेहाए, संपेहाय । पसारिए । "पाए पसारिए वा- वि, न चिट्ठे गुरुणंतिए" ॥ णिस्साए ॥

## इः काट्ठयोः ॥३।३।१२॥

काट्ठाधात्वोरिकारोऽन्त्यादेशः स्याद्दुप्रत्यये । किच्चा, किच्च । ठिच्चा, ठिच्च । वा० ( काहराभ्यां ट्टुरलोपश्च वक्तव्यः ) कट्टु । हट्टु ॥

## किट्टादिभ्यस्तयोर्यः ॥३।३।६१॥

किट्टादिगणपठितधातुभ्यः परस्य त्ताप्रत्ययस्य द्वयोस्त- कारयोर्यकारादेशो वा स्यात् । किट्टित्ता, किट्टिया । पेहिया । संपेहिया । क्खिवस्योपधायाः पादेशो, उक्खिप्प ॥

## गमभन्नदिसहणेभ्यस्तात्तुतव्वाडितोऽनिटो णन्न- योर्मः ॥३।३।१६॥

एभ्यः पर एते प्रत्यया डितोऽनिटश्च स्युर्णन्नयोर्मकारादे- शश्च स्यात् ॥

## त्तात्वोरादितलोपः ॥३।३।१७॥

एभ्यः परयोस्तात्तुप्रत्यययोरादेर्लोपः स्यात् । गंता ॥

## आतो गमात्तो वेट् ॥३।३।२२॥

आतः परस्माद्गमधातोः परस्य त्ताप्रत्ययस्येडागमो वा

---

× पादौ प्रसार्य वापि न तिष्ठेद्गुर्वन्तिके ॥ उत्त० १–१९ ॥

÷ किट्ट, प-इह, जाण, उद्-जाल, प-णुल्ल, ओ-तार, आ-ताव, तुल, सम्-घट्ट, धुण, पज्ज, पाल, फास, बुज्झ, भुंज, लंव, लभ, ला, वाग, निग्- वाव, सक्क, सव, सिंच, सेह, सोह, हण, हर, हूण, एते किट्टादयः ॥

स्यात् । आगमित्ता, आगन्ता, इडागमे तकारस्यानादित्वान्न लोपः ॥

गमागिण्हलुभादिसवुमुंचलभेभ्यस्तोरनुस्वारः ॥३।३।२३॥

एभ्यो धातुभ्यः परस्य तुप्रत्ययस्यानुस्वारान्तागमः स्यात् । गंतुं । अब्भुवगंतुं ॥

गमागिण्हच्छिंदभिंदेभ्यो वा ॥३।३।२७॥

एभ्यः परस्य णप्रत्ययस्य तडागमो वा स्यात् ॥

ऊणस्य वा ॥३।३।२४॥

ऊणप्रत्ययस्यानुस्वारान्तागमो वा स्यात् । गन्तूणं, गमिऊण ॥

डस्येऽकंखाद्दीर्घश्च वा ॥३।३।२८॥

कंखभिन्नधातोः परस्य डप्रत्ययस्येडागमः स्याद्विकल्पेन दीर्घश्च । उवउज्झ । पकत्थ । अइक्कम्म ।आगम्म । अकंखादिति किम् ? अभिकंख ॥

तुंतूणतव्वेषु घेत् ॥३।३।३१॥

गिण्हधातोस्तुंतूणतव्वप्रत्ययेषु घेदादेशः स्यात् । घेत्तुं, घित्तुं, घेत्तूण ॥

गिण्हस्य णलोपोऽडयोः ॥३।३।२६॥

गिण्हधातोर्णकारस्य लोपः स्यादडयोः परयोः । गिज्झ । परिगिज्झ ॥

उपसर्गादिये गिज्झः ॥३।३।३२॥

उपसर्गात्परस्य गिण्हधातोर्गिज्झादेशः स्यादियप्रत्यये। ओगिज्झिय। निगिज्झिय। परिगिज्झिय॥

वेश्चिन्तस्येरहितस्य इत्वोः ॥३।३।३३॥

वेरुपसर्गात्परस्य चिंतधातोरिकाररहितस्य लोपः स्यादियत्तुप्रत्यययोः परयोः। अणुवीइत्तु, वीइय॥

अणोर्यस्य च ३।३।३४॥

अणुविपूर्वकस्य चिन्तधातोरियप्रत्ययस्य यकारस्य चकारादिरहितस्य लोपः स्यात्। अणुवीइ॥

उदस्ति ॥४।४।९७॥

उदः परस्य चिणधातोरिणस्य लोपः स्यात् त्ताप्रत्यये परे। उच्चित्ता॥

उमूणयोर्निरः ॥४।४।९६॥

निरः परस्य चिणधातोरिणस्य लोपः स्यादुम्-ऊणयोः परयोः। निच्छिउं, निच्छिऊण॥

चयछिंदपिबभिंदभुजहराणां डे चः ॥३।३।५८॥

एषामुपधायाश्चकारादेशः स्याड्डप्रत्यये।

छिक्कस्य त्ति दीर्घकलोपौ ॥३।३।१५॥

छिक्कधातोरिकारस्य दीर्घः ककारयोर्लोपश्च स्यात्त्ताप्रत्यये। छीइत्ता॥

चयस्यादेः ॥३।३।१३॥

चयधातोरादेरकारस्येकारः स्याड्डप्रत्यये। चिच्चा।

परिव्रयस्य जः ॥३।३।५६॥

परिपूर्वकव्रयधातोरुपधाया जकारादेशः स्याड्डुप्रत्यये। परिव्वज्ज। विभज्ज॥

छुभभुंजमुंचादिसलभेभ्यस्तडूणस्य ङिच्च ॥३।३।२६॥

एभ्यः परस्योणप्रत्ययस्य तडागमः स्यात्स च ङित्। इटोऽपवादः॥

त्तुत्तूणयोश्छुभस्य छोहः ॥३।३।२५॥

छुभधातोश्छोहादेशः स्यात् त्तुत्तूणयोः परयोः॥

छुभादिसमुंचपारेभुंजलभेभ्यस्तुः ॥३।३।१८॥

एभ्यः परस्तुप्रत्ययो ङिदनिट् च स्यात्। छोढुं, छोढूण॥

ऊणे निरो जिणस्य ॥४।४।६८॥

निरः परस्य जिणधातोरिणस्य लोपः स्यादूणप्रत्यये। निज्जिऊण॥

यागे जयस्य जिठः ॥३।३।१४॥

जयधातोर्जिठादेशः स्याद्यागेऽर्थे डप्रत्यये परे। जिट्ठ॥

ट्ठवरोहयोः पः ॥३।३।६०॥

अनयोरुपधायाः पकारादेशः स्याड्डुप्रत्यये। परिट्ठप्प। आरोप्प॥

*तक्कादिभ्यो णङ् [1]मपरको वा त्तः ॥४।४।४७॥

एभ्यो धातुभ्यः परस्य त्ताप्रत्ययस्य णागागमः स्यात् स च विकल्पेन मपरकः स्यात्। तक्कियाणं। णिद्दुणित्ताण।

---

* तक्क, धुग, पील, लंब, वज्ज, सव, एते तक्कादयः।

१ अत्राकार उच्चारणार्थः।

आवीलियाण । परिवीलियाण । परिवज्झियाण । परिसाविआण ॥

उमि समस्थोस्त्थुणस्य सेटः ॥३।३।३६॥

समः परस्य त्थुणधातोरिट्सहितस्य थो इत्यादेशः स्यादुमि परे । संथोउं । वा० (त्ति त्थंभस्यादेष्ठो वा वक्तव्यः) । उट्ठंभिया ॥

दिसात्तव्वतारत्तुंतूणानां तस्य ठोऽदितः ॥३।३।३७॥

दिसधातोः परेषामेषां तकारस्य ठकारो देसस्येकारस्याकारश्च स्यात् । दट्ठुं, दट्ठूण । दिस्स । दिस्सा । पदेस्सा ॥

उदो धरात्तोः ॥३।३।२५॥

उत्पूर्वकधरधातोः परस्य तुप्रत्ययस्यानुस्वारान्तागमो वा स्यात् । उद्धत्तुं, उद्धत्तु ॥

धुणस्य धूयः सेयस्य ॥३।३।३८॥

इयप्रत्ययसहितस्य धुणस्य धूयादेशो वा स्यात् । निद्धूय । संविद्धूय । संविधुणिय ॥

वेर्नेरदिट् त्तोः[1] ॥३।३।३९॥

वेः परस्य नेधातोरकारोऽन्त्यादेशस्तोरिडागमश्च । विणइत्तु ॥

ईरिये ॥३।३।४२॥

वेः परस्मान्नेधातोरेकारादियप्रत्ययावयवेकारे परे पूर्वपरयोरीकारादेशः स्यात् । विणीय ॥

[1] अनिट्त्वादिटोऽप्राप्तौ वचनम् ॥

न्तेययोश्चानोः ॥३।१।८०॥

अनोः परस्य पासधातोरुपधाया ह्रित्वं स्यात् न्त-इयप्रत्यययोः परयोश्चकारादिनि परे । अणुपस्निय ॥

बोरावस्य याट् ॥४।४।४३॥

बुधातोः परस्यावप्रत्ययस्य याडागमः स्यात् त्ताप्रत्यये । बुधावेत्ता ॥

भुंजस्य भोऽस्त्वि ॥३।३।४७॥

भुंजधातोर्भो इत्यादेशो वा स्यात् त्ताप्रत्यये परे । भोड्त्ता, भुंजित्ता, भुंजिया ॥

भुंजात्तारश्च ॥३।३।४४॥

भुंजात्तारप्रत्ययश्चकारात् त्तूणप्रत्ययो णित् स्यात् । भोत्तूण ॥

अनिटौ त्तएत्तू ॥३।३।४५॥

भुंजधातोः परावनिटावेतौ णितौ स्तः । परिभोत्तु । केवलात्तोः, सेट्त्वात्, भुंजित्तु । वा० ( मन्ने मस्य तो वावक्तव्यस्ति ) मत्ता, मंता ॥

मुंचात् त्तूणो णित् ॥३।३।४३॥

अस्मात्परस्त्तूणप्रत्ययो णित् स्यात् । मोत्तुं, मोत्तूण, मुत्तूण ॥

मुज्झस्य मोहोऽतव्वे कृति ॥३।३।४१॥

मुज्झधातोर्मोहादेशः स्यात्तव्वभिन्ने कृति परे । विमोहित्ता ॥

## आतो रंभस्य ढत्तं सडस्य ॥३।३।४८॥

आकारात्परस्य रंभधातोईप्रत्ययसहितस्य ढत्तमिति वा निपात्यते। आढत्तं। "इतो आढत्तं"। समारम्भ, समारभित्ता। संलप्प॥

## अत्तयोः केवलस्य ॥४।१।३६॥

उपसर्गरहितस्य लभधातोर्लस्याऽनुस्वारागमो वा स्याद् अत्ताप्रत्यययोः परयोः। लंभित्ता, लभित्ता, लद्धुं, लद्धूण॥

## अभेस्त्ति ॥४।१।३४॥

अभेः परस्य वड्ढधातोरादेरकारस्योकारः स्यात् त्ताप्रत्यये परे। अभिवुड्ढित्ता॥

## नेस्तातित्तामाणेषु ॥४।१।३५॥

नेः परस्य वड्ढधातोरादेरकारस्योकारः स्यात् त्ताप्रत्यये माणप्रत्यये तयोश्च। णिवुड्ढित्ता॥

## अभेरूणे वन्दस्य वाः ॥३।३।५०॥

अभेरुपसर्गात्परस्य वन्दधातोर्वादेशः स्याद् ऊणप्रत्यये परे। अभिवाइऊण॥

## वरस्य वासस्तेतोः ॥३।३।५२॥

वरसधातोर्वासादेशः स्यात् त्ताप्रत्ययेतप्रत्यययोः परयोः। वासित्ता। विदित्ता, विइत्ता॥

## ओः समस्य वस्तोतयोः ॥३।३।६३॥

ओकारोपसर्गात्परस्य समधातोरुपधाया वकारः स्यात् त्ताइतप्रत्यययोः परयोः। विओसवित्ता॥

१ इत आरभ्य। (पन्न० १८)॥

व्युद्भ्यामिये ॥३।१।१३३॥

विउद्भ्यां परस्य स्रिधातोः स इत्यादेशः स्यादियप्रत्यये । विउस्सिय ॥

समाभ्यां सीयस्य सजः ॥३।३।५४॥

सम् आपरस्य सीयधातोः सजादेशः स्यादुप्रत्यये । समासज्ज ॥

केवलात्सुणादुमूणयोः ॥३।१।३०॥

उपसर्गरहितात्सुणाधातोः परयोरनयोरिडागमो न स्यात् ॥

अनिटोरुमूणयोः सोः ॥३।३।५६॥

सुणाधातोः सो इत्यादेशः स्यादनिटि उमि ऊणे च । सोउं, सोऊण ॥

सुणस्य सोचः ॥३।३।५५॥

सुणधातोः सोच इत्यादेशः स्यादुप्रत्यये । सुच्चा, सोच्चा ॥

हणस्य हस्य हुरिये ॥१।३।१३॥

आकारोपसर्गात्परस्य हणाधातोर्हकारस्य हुः स्यादिये परे । आहुणिय ॥

हास्ति च ॥४।४।२२॥

हाधातोस्त्वाप्रत्ययेऽपि यगागमः स्यात् । हायत्ता ॥

हए: ॥३।३।९॥

हाधातोरेकारान्तादेशः स्यादुप्रत्यये । हेच्च ॥

॥ इति कृदन्ते सम्बन्धार्थप्रक्रिया ॥

# अथ कृदन्ते हेत्वर्थप्रक्रिया ॥

त्तएत्तुमुमः क्रियार्थायां क्रियायाम् ॥३।३।६४ ॥

किञ्चित्क्रियाप्रयोजनिकायाः क्रियाया विवक्षायां धातोर्भविष्यदर्थे त्तए-त्तुम्-उम्-एते प्रत्ययाः स्युः। करित्तए। पकरेत्तए। वागरित्तए। वियागरित्तए। कारवेत्तए, काराविक्तए, कारावेत्तए ॥

उवादयादिटो वा त्तययि ॥४।४।४८॥

उवोपसर्गादयधातोः परस्येडागमस्य णागागमो वा स्यात् त्तएप्रत्यये। उवाइणित्तए, उवाइत्तए ॥

पलायादुमि सेटो यस्यैः ॥३।३।६५॥

पलापूर्वकादयधातोरिट्सहितस्य यस्यैकारादेशः स्यादुमि प्रत्यये परे। पलाएउं ॥

परेश्चयात् त्तएः ॥३।३।१६॥

परिपूर्वकात् चयधातोः परस्त्तएप्रत्ययो डित् अनिट् च स्यात्। परिचत्तए ॥

चरादएण् च ॥३।३।६७॥

चरधातोरुक्तेऽर्थेऽएण्प्रत्ययश्च स्यात्। चारए ॥

नेर्जुंजस्य योयः ॥३।३।६६॥

नेः परस्य जुंजधातोर्योयादेशः स्यादुमि परे। निओइउं ॥

दिसात् त्तुम् ॥३।३।४६॥

दिसधातोः परस्त्तुमप्रत्ययो णित् स्यात्। उद्देट्टुं।

धरस्य त्तुतुमोः ॥४।४।१११॥

धरधातो रस्य लोपः स्यात् त्तुतुमोः परयोः। समुद्धत्तुं॥

पावसाभ्यां वा ॥३।१।२५॥

पावसधातुभ्यां परस्य त्तणप्रत्ययस्येडागमो वा स्यात्। पाइत्तण। पक्षे,

पोऽनिटस्त्तणः ॥३।३।६२॥

पाधातोः परस्याऽनिटस्त्तणप्रत्ययस्य तकारयोर्यकारः स्यात्। पायण॥

भुंजात्केवलात् ॥३।३।२०॥

उपसर्गरहिताद्भुजधातोः परस्त्तणप्रत्ययो डिदनिट् च स्यात्। भुत्तण, भोत्तण। केवलादिति किम्?, संभुंजित्तण॥

आदेतौ वंदात् ॥ ३।३।६८॥

वंदधातोस्त्तणविषये आप्रत्ययएप्रत्ययौ भवतः। अभिवंदए, अभिवंदआ, अभिवंदित्तए, अभिवंदिउं। "निज्जाइस्सामि महावीरं अभिवंदए" "महावीरं अभिवंदआ"

वच्चात् तुंतारतव्वा डितः ॥३।३।६६॥

वच्चधातोः परे तुंतारतव्वप्रत्यया डितः स्युः। वत्तुं॥

उमि वा ॥३।३।५३॥

वरसधातोर्वासादेशो वा स्यादुमि परे। वासिउं। पक्षे,

वरसे सस्य णोमोरनादेशे ॥३।३।४०॥

अनादेशवरसधातुघटकस्य सस्येडागमः स्यादुमि परे णे

१ निर्यास्यामि महावीरमभिवन्दितुम्। (ओव० २६)।

२ महावीरमभिवन्दितुम्। (ओव० ३०)।

परे च । वरिसेउं ॥

वसाच्च ॥३।३।२१॥

वसधातोः परस्त्तएप्रत्ययो डित्स्यात् । वसित्तए, वत्थए ॥

॥ इति कृदन्ते हेत्वर्थप्रक्रिया ॥

# अथ कृदन्ते वर्त्तमानप्रक्रिया ॥

वर्त्तमाने न्तमाणावप्रधाने ॥३।४।१॥

ययोर्धात्वर्थयोरेक एव कर्त्ता तयोरप्रधानक्रियावाचका-द्धातोर्वर्त्तमाने न्तमाणप्रत्ययौ स्तः । करिन्तो, करेन्तो, कज्ज-माणो, किज्जमाणो, कीरन्तो, कीरमाणो । धिक्कारिज्जमाणो । सक्करमाणो । पुक्करन्तो । वागरमाणो, वियागरेमाणो । "स-मोऽज्जः" इत्यादिनेणादेशो, समज्झिणमाणो ॥

मस्यात्थमस्य न्ते लोपः ॥३।४।३॥

अत्थमधातोर्मस्य लोपः स्यात् न्तप्रत्यये परे । अत्थन्तो ॥

आसादीणड् ॥३।४।२॥

आसधातोर्वर्त्तमानेऽर्थे ईणड्प्रत्ययः स्यात् । आसीणो ॥

न्तमाणयोरातो ज्जगः ॥४।४।२६॥

आकारोपसर्गात्परस्येधातोर्ज्जगागमः स्यात् न्तमाणप्र-त्ययोः परयोः । एज्जन्तो, एज्जमाणो । पादेरित्यादिना चेट्टि, पेच्चमाणो ॥

पडेर्माणे ॥३।१।१५१॥

पडेरुपसर्गात्परस्येक्खधातोः खकारस्य छकारः स्या-न्माणप्रत्यये । पडिच्छमाणो ॥

पपलिभ्यां माणेतयोः ॥३।१।६७॥

आभ्यां परस्योंजधातोरुपधाया द्वित्वं स्यात् क्रमेण माणे इते च परे। पउज्जमाणो॥

आयो माणे कर्मणि ॥४।४।९९॥

वेरुपसर्गात्परस्य किणधातोरिणस्यायादेशः स्यात्कर्मणि माणप्रत्यये परे। विक्कायमाणो। पच्चक्खन्तो॥

पच्चक्खो माणे ह्रस्वः ॥३।४।१०॥

पतिआपूर्वकस्य क्खाधातोरन्त्यस्य ह्रस्वः स्यान्माणप्रत्यये परे। पच्चक्खमाणो। एप्रत्ययेन व्यवधानान्न ह्रस्वः, पच्चक्खाएमाणो॥

उवाद्गमस्य न्ते ॥३।२।४७॥

उवात्परस्य गमधातोरन्त्यस्य लोपः स्यात् न्तप्रत्यये परे। उवगन्तो॥

न्तस्य खावादियट् ॥४।४।५१॥

आवप्रत्ययान्तखाधातोः परस्य न्तप्रत्ययस्येयडागमः स्यात्। खावियन्तो॥

समो माणे ॥३।१।७८॥

समः परस्य खुभधातोरुपधाया द्वित्वं स्यान्माणप्रत्यये परे। संखुब्भमाणो। घिप्पमाणो॥

परेराति माणे ॥३।३।३०॥

परेः परस्य गिण्हधातोर्णकारस्य लोपः स्यान्माणप्रत्यय-परके अप्रत्यये परे। परिगिज्झमाणो॥

विगोवदलयोर्माणे ॥४।४।३१॥

अनयोर्माणप्रत्यये परे यगागमो वा स्यात्। विगोवयमाणो, विगोवेमाणो ॥

आग्घादीनां माणे ॥४।४।२३॥

एषां धातूनां यगागमः स्यान्माणे परे । अग्घायमाणो, आग्घायमाणो । गायमाणो । जायमाणो ।

वेश्छड्डस्येयक् ॥४।४।५२॥

वेरुपसर्गात्परस्य छड्डधातोरियगागमो वा स्यान्माणप्रत्यये। विच्छड्डियमाणो, विच्छड्डेमाणो ॥

जणादीनां न्ते ॥४।४।२४॥

जणादिधातूनां न्ते परे यगागमः स्यात् । जणयन्तो । गायन्तो । समावयन्तो ॥

इराढः ॥३।४।११॥

आपूर्वकस्य ढाधातोरिकारोऽन्तादेशो वा स्यान्माणप्रत्यये परे । आढियमाणो । आढायमाणो । प्रकृतिभावे, आढाइज्जमाणो । पूर्वस्वरलोपे, आढिज्जमाणो ॥

तिप्पदादरिसानां न्ते ॥४।४।३२॥

एषां धातूनां न्ते परे यगागमो वा स्यात् । तिप्पयन्तो,

---

* आ-ग्घा, गा, जा, निर्-जा, जम्भा, नि-जम्भा, भिया, ढा, आ-ढा,दा, निर्-द्दा, न्हा, बु, वा, हा, ओ-हा, परि-हा, एते आग्घादयः ॥

× जण, सम्-आव, कित्त, गा, जम्भा, तज्ज, आ-दा, आ-दाव, दीव, धार, पूर, फास, बु, नि-मन्न, मिला, आ-वर, अणु-वद, वेद, आ-वर, वा, सिण, परि-हा, हील, एते जणादयः ।

तिप्पन्तो। दायन्तो, देन्तो, दिन्तो। दरिसयन्तो, दरिसन्तो॥

आतस्तुडस्येज्जे ॥१।३।३३॥

आतः परस्य तुडधातोरुकारस्य वृद्धिः स्यादिज्जे परे। आतोडिज्जमाणो॥

बुसद्दहाभ्यां माणस्यादेः ॥४।४।११५॥

बुधातोः सदुपपदकाद्दहधातोश्च विहितस्य माणप्रत्ययस्यादेर्मकारस्य लोपो वा स्यात्। सद्दहाणो, सद्दहमाणो। बुयाणो, बुयमाणो॥

माणे वा ॥१।४।१२४॥

दिसधातोरुपधाया हकारो वा स्यान्माणप्रत्यये परे। देहमाणो, देसमाणो॥

आवे दो दवस्त्तएमाणयोः ॥३।४।८॥

आवप्रत्यये परे दाधातोर्दवादेशः स्यात् त्तएमाणप्रत्यययोः परयोः। दवावेमाणो॥

दुसस्य माणे ॥३।१।७०॥

दुसधातोरुपधाया द्वित्वं स्यान्माणप्रत्यये परे। दुस्समाणो॥

उदः कसस्य वा ॥३।१।७२॥

उदः परस्य कसधातोरुपधाया द्वित्वं वा स्यान्माणप्रत्यये परे। उक्कस्समाणो, उक्कसमाणो। उपधाया इत्यधिकृत्य,

धावस्येतमाणयोर्यः ॥३।४।१२॥

धावधातोरुपधाया यकारादेशो वा स्यादितमाणयोः परयोः। उद्धायमाणो। परिधावमाणो॥

न्ते वा ॥३।१।११९॥

बीहधातोर्भयादेशो वा स्यात् न्तप्रत्यये परे। भयन्तो, बीहन्तो, भयमाणो ॥

न्ते परेः ॥३।२।६१॥

परेः परस्य माधातोर्मिणादेशः स्यात् न्तप्रत्यये परे। परिमिणन्तो। वा० (रंभस्य न्तेऽनुस्वारस्य लोपो वाच्यः)। आरभन्तो ॥

न्ते वा ॥३।२।२१॥

रञ्जधातो रंगादेशो वा स्यात् न्ते परे। रंगन्तो, रञ्जन्तो ॥

पाल्लियस्यादेः ॥३।४।४॥

पकारोपसर्गात्परस्य ल्लियधातोरादेर्लोपः स्यात् ॥

इतो दीर्घश्च वा माणे ॥३।४।६॥

ल्लियधातोरिकारस्य दीर्घश्चाल्ले इत्यादेशो वा स्यान्माणे परे। पलीयमाणो पलेमाणो ॥

न्तेज्जयोर्लीः ॥३।४।७॥

ल्लियधातोर्ली इत्यादेशः स्यात् न्तप्रत्ययेज्जप्रत्यययोः। निलिन्तो ॥

माणे वायः प्रेरणायाम् ॥३।३।५१॥

अभेः परस्य वंदधातोर्वायादेशः स्यान्माणप्रत्यये परे प्रेरणायाम्। अभिवायमाणो ॥

वच्चाद्भविष्यति च माणश्चस्य क्खः ॥३।४।१६॥

वच्चधातोर्भविष्यदर्थेऽपि माणप्रत्ययः स्यात् धातोश्चस्य क्खादेशश्च। वक्खमाणो ॥

न्ते वा ॥१।४।१३०॥

वहधातोरुपधाया द्वित्वं झकारादेशश्च न्ते परे वा स्यात् ॥

न्ते द्वित्वे ॥३।१।१३१॥

वहधातोरकारस्यौकारः स्यात् न्तप्रत्यये परे उपधाया द्वित्वे सति । वोज्झन्तो, वहन्तो ॥

कर्माणि चाति ॥१।४।१२६॥

वहधातोरुपधाया झकारादेशो द्वित्वमकारस्योकारश्च स्यात् कर्मवाच्येऽप्रत्यये परेऽपि । उवुज्झमाणो ॥

परेर्हो न्तमाणयोर्न ॥३।२।५३॥

परेरुपसर्गात्परस्य हाधातोरीकारोऽन्तादेशो न स्यात् न्तमाणयोः परयोः । परिहायन्तो परिहायमाणो ॥

॥ इति कृदन्ते वर्त्तमानार्थप्रक्रिया ॥

# अथ कृदन्ते भूतार्थप्रक्रिया ॥

भूते तेतौ ॥४।१।१॥

भूतेऽर्थे धातोस्तइतौ प्रत्ययौ यथाप्रयोगं भवतो भावे कर्मणि च । क्वचित्तः क्वचिदितः क्वचिदुभयमिति यावत् ॥

अदितयोरिवैकादेशे ॥१।४।१३५॥

अभेरुपसर्गात्परस्यांजधातोरकारस्येकारो वा स्यादेकादेशे सति अप्रत्ययइप्रत्यययोः परयोः । अभिंगिए, अभंगिए । अभेरिति किम्? वियंजिओ, वंजिओ । वियत्तो ॥

अतो लोपस्तत्योः ॥४।१।२॥

धातोरन्त्यस्याकारस्य लोपः स्यात्त-तिप्रत्यययोः ।

पलेर्होऽथे ॥४।१।३॥

पलेरिकारस्य हकारः स्यात्तप्रत्ययान्तासधातौ परे । पल्हत्थो ॥

वेः परेरोच्चः ॥४।१।४॥

वेः परस्य परेरोच्चादेशः स्यात्तप्रत्ययान्तासधातौ परे । वोच्चत्थो ॥

उवाद्वद् ते ॥४।४।५०॥

उवात्परस्येधातोर्वडागमः स्यात्तप्रत्यये । उववेओ ॥

परेरेस्तः ॥३।१।८२॥

परिपूर्वकादिधातोः परस्य तप्रत्ययतकारस्य द्वित्वं स्यात् । परित्तो ॥

झधभेभ्यस्तस्य धः ॥१।४।६॥

एभ्यः परस्य तकारस्य धकारः स्यात् । इद्धो, समिद्धो ॥

संयुक्तेऽनुस्वारस्य ॥४।४।६४॥

संयुक्ते परेऽनुस्वारस्य लोपः स्यात् । नियुत्तो । पउत्तो ॥

पाभ्यामुणात्तस्य डः ॥४।१।६॥

आभ्यां परस्मादुणधातोः परस्य तप्रत्ययस्य डः स्यात् ॥ उपधाया इत्यधिकृत्य,

पाउ*णादीनां ते लोपः ॥४।१।७५॥

पाउणादीनामुपधाया लोपः स्यात्तप्रत्यये परे । अभित्थुओ । संथुओ । नए । उण्णए । पणए । परिणतो ॥

---

* प-आ-उण, कर, उद्-खण, गम, अव-गुर, जिण, झिझ, तण, ति-त्थर त्थुण, धुण, नम, मर, रम, वर, मुण, हण, हर, हुण, एते पाउणादयः ।

आउडे पस्य वः ॥४।१।१५॥

आउडे परे पोपसर्गस्य वो वा स्यात् । वाउडो, पाउडो ॥

अनसादिभ्यः साड्ढः ॥४।१।१६॥

असृगसद्धंसमियंसवससंसस्ससादिभिन्नधातोः सकारात्परस्य तप्रत्ययस्य ढः स्यात् । एस+त=इड्ढो । घट्टो । अनसादीति किम् ? भस्थो ॥

उदः कत्तकसयोरादेरिर्वा ते ॥४।१।२६॥

उदः परयोरनयोरादेरकारस्येकारो वा स्यात्तप्रत्यये । उक्तिसो, उक्कसो ॥

केवलाड्डा ॥४।१।१०॥

उपसर्गरहितात्करधातोः परस्य तप्रत्ययस्य डो वा स्यात् । कडो, कओ ॥

उः करादीनाम् ॥४।१।३२॥

करादीनामादेरकारस्योकारो वा स्यात्तप्रत्यये । उडो । "पंजेलिउडे" । उक्कुट्ठो, उक्किट्ठो ॥

व्यापुराभ्यां करात् ॥४।१।६॥

विआ पुराभ्यां परस्मात्करधातोः परस्य तप्रत्ययस्य डः स्यात् ॥

* कर, उत्-कस, जर, उद्-मज्ज, मर, वर, वरस, प-वरस, पुंत, करादयः ॥

१ प्राञ्जलिकृतः ( कृतप्राञ्जलिरित्यर्थः ) । ( नाय० १ ५ ) ।

पुरस्ते वा ॥३।१।१३६॥

पुरोपसर्गात्परस्य करधातोः क्खडादेशो वा स्यात्तप्रत्यये ॥

कडक्खडयोः पुर एः ॥४।१।३८॥

पुराशब्दस्यैकारान्तादेशो वा स्यात् कडक्खडयोः परयोः । पुरेकडो, पुराकडो । पुरेक्खडो, पुरक्खडो ॥

वेरात ओः कडे ॥४।१।४०॥

वेः परस्याकारोपसर्गस्यौकारः स्यात्कडे । वोगडो, वोयडो ॥

इते करादीनामादिं विना लोपः ॥४।१।४५॥

सत्करादिधातूनामादिवर्णं परित्यज्य लोपः स्यादितप्रत्यये परे । सक्किओ । उद्धिओ, उद्धितो । संभिओ । मिओ ॥

समः कये कोऽनुस्वारस्य ॥४।१।४१॥

समोऽनुस्वारस्य कः स्यात्कये परे । सक्कओ ॥

कसस्य रिट् ॥४।४।५३॥

उपसर्गरहितकसधातोरुपधाया रिडागमो वा स्यादितप्रत्यये । करिसितो ॥

उदः कसात्तस्य सो लोपश्च ॥४।१।४२॥

उदः परस्मात्कसधातोः परस्य तप्रत्ययस्य सकारलोपौ पर्यायेण वा स्तः । उक्कोसो, उक्कस्सो ॥

* सत्-कर, आ-दर, उद्-धर, सम्-भर, मर, आ-सिन्न, स्तय, सर, हर, एते करादयः ।

### वेः कसस्य नित्यम् ॥४।१।३०॥

वेः परस्य कसधातोरादेरकारस्येकारो नित्यं स्यात्तप्रत्यये परे। विगिट्ठो। वेरिति किम्? विप्पकट्ठो॥

### दराभ्यां नः ॥४।१।१६॥

दकाररेफाभ्यां परस्य तप्रत्ययस्य नकारादेशः स्यात्। छिण्णो। आइन्नो। उक्खिण्णो। गिण्णो। उग्गिण्णो। सन्नो। निसण्णो॥

### समः कुंचस्याणितयोरनुस्वारस्य च ॥४।४।११६॥

समः परस्य कुंचधातोरनुस्वारस्य चकारादुपधाया लोपो वा स्यादणप्रत्ययेतप्रत्यययोः। संकुइओ, संकुचिओ। मोऽनुस्वारे, कंतो। अइकंतो। अभिकंतो। अभिनिक्खंतो। किलन्तो, किलान्तो। आयंतो। परितंतो। दंतो। धंतो। संतो॥

### केवलादिते दीर्घश्च वा ॥४।४।६४॥

उपसर्गरहितात्किणधातोरिणस्य लोपो वा स्यादितप्रत्यये इकारस्य दीर्घश्च। कीओ, किणिओ॥

### परेः क्रोसस्यादेस्ते ॥४।१।४३॥

परेः परस्य क्रोसधातोरादेर्लोपः स्यात्तप्रत्यये। पडिकुट्ठो॥

### ते घाः ॥३।१।१५५॥

आतः परस्य क्खाधातोर्घा इत्यादेशः स्यात्तप्रत्यये। आघाओ, आघातो॥

### खिज्झिझडील्हियहाभ्यो णः ॥४।१।२०॥

एभ्यः परस्य तप्रत्ययस्य णः स्यात्॥

### क्षियामीणे ॥४।१।२१॥

उक्तधातूनामन्त्यस्यैकारादेशः स्याण्णे परे। पलिक्खीणो। उक्खीणो। लीणो। पलीणो। संलीणो। विलीणो॥

### आतोरङ् गमे ॥४।४।५५॥

आकारोपसर्गस्य रडागमः स्याद्गमधातौ परे। अणुरागयं। "[1]सुसागयं खंदया! अणुरागयं खंदया!" "[2]गैन्निरागतिं करेज्जा"॥

### गसस्य घः ॥४।१।४४॥

अस्यादेर्घकारादेशः स्यात्तप्रत्यये परे। घत्थो॥

### गश्च ॥४।१।३१॥

गाधातोरन्त्यस्यैकारादेशः स्यात्तप्रत्यये। गीतो। उक्कीयं॥

### हतयोरव्यवहितयोर्ढः ॥४।१।५१॥

धातुप्रत्ययावयवयोर्हकारतकारयोरव्यवहितपूर्वापरीभावे ढादेशः स्यात्। गाढो। उयगाढो। ओगाढो। उवगूढो॥

### गिज्झस्य गढः ॥४।१।४८॥

अस्य धातोर्गढादेशः स्यादितप्रत्यये। गढिओ॥

### अवस्य गुयेऽनुस्वारः ॥४।४।५८॥

अवोपसर्गस्यानुस्वारान्तागमः स्यात्तप्रत्ययान्तगुयधातौ परे। अवंगुयं॥

---

१ सुस्वागतं स्कन्दक! अन्वागतं स्कन्दक!। (भग० २-१)।

२ गत्यागतिं कुर्यात्। (भग० २४-१)

## ग्गहादितो दीर्घो वेतस्य ॥४।१।४९॥

ग्गह्धातो परस्येतप्रत्ययस्येकारस्य दीर्घो वा स्यात् । गह्हीयं, गह्हियं ॥

## चेरादीनामिस्ते ॥४।१।६०॥

एषामकारस्येकारः स्यात्तप्रत्यये परे। चिण्णो। आइण्णो। निज्झिण्णो । तिरणो । विच्छिरणो । पविस्तो ॥

## वेश्चिगिच्छस्य तिकिट्टस्तेतयोस्तलोपश्च ॥४।१।५०॥

वेः परस्य चिगिच्छधातोस्तिकिट्टादेशः स्यात्तइतप्रत्ययोः परयोस्तप्रत्ययस्य लोपश्च । विइकिट्टियं, वितिकिट्टियं। विइकिट्टं, वितिकिट्टं ॥

## चिणजिणयोश्च ॥४।४।९५॥

एतयोरिणस्य लोपः स्यादितप्रत्यये परे । चियं । अवचियं। उवचियं। णिच्छियं ॥

## आसमुभ्यां चिणस्य ॥४।१।२७॥

आ सम्-उ, आभ्यां परस्य चिणधातोरादेर्लोपो वा स्यात्तप्रत्यये । आइयं, आचियं। समुइयं, समुचितम् । वा० (विपरिभ्यामदितयोश्चस्य जो वा वक्तव्यः) । परिजितं, - परिचितं । विजओ, विचओ॥

## निरश्चिणात् ॥४।१।२२॥

निरः परस्माच्चिणधातोः परस्य तप्रत्ययस्य णः स्यात् । निच्छिण्णं ॥

---

१ चर, चय, जर, नर, त्थर, वत्त, एते चरादयः ।

**क्षयादृद्धिः ॥४।१।२३॥**

अस्मात्परस्य तप्रत्ययस्य तकारस्य छित्वं स्यात्। चियत्तं ॥

**च्छिन्दस्य छहः ॥४।१।५३॥**

च्छिन्दधातोश्छहादेशः स्यादितप्रत्यये परे । छहियं, छिन्नं । "वेयगच्छहियं अंगच्छहियं...करेह" ।

**च्छुभमुज्झयोश्छूहमूढौ ॥४।१।७९॥**

अनयोः क्रमेण छूह मूढ इत्येतावादेशौ स्तस्तप्रत्यये । निच्छूढं । मूढो । संमूढा ॥

**च्छुहस्य स्पर्शे तः ॥४।१।८२॥**

च्छुहधातोरुपधायास्तकारः स्यात्तप्रत्यये स्पर्शेऽर्थे । छुत्तं ॥

**जहस्ते ॥४।४।११७॥**

जहाधातोरन्त्यस्य लोपः स्यात्तप्रत्यये । जढं । विप्पजढं ॥

**जेमादीनां ह्रस्वः ॥४।१।४६॥**

एषां स्वरस्य ह्रस्वः स्यादितप्रत्यये । जिमियं । पमुइयं । अभिरुइयं । लइयं । विलुलियं । खइयं ॥

**आतश्च्छादस्येते ॥१।३।१२॥**

आकारात्परस्य च्छादधातोराकारस्य ह्रस्वो वा स्यादितप्रत्यये परे । आच्छदियं, आच्छादियं ॥

**योजने जोयस्य डतौ ॥४।१।८३॥**

जोयधातोरुपधाया डकारस्तकारश्च स्यादितप्रत्यये योजनेऽर्थे ॥ जोडियं, जोतियं ॥

---

१ वेदकच्छिन्नं अङ्ग-च्छिन्नं कुरुत । (सूय० २-२-३५) ।

---

* जेम. पक्खोड. ग्वा. प्फोड, मोद, रोय, ला, लोल, इति जेमादयः

जोसस्य वा ॥४।१।४७॥

अस्यौकारस्य ह्रस्वो वा स्यादितप्रत्यये । जुसियं, जोसियं ॥

पाज्जलस्यादेरुदिते ॥४।१।८४॥

प्रोपसर्गात्परस्य ज्वलधातोर्जस्योकारः स्यादितप्रत्यये परे । पउल्लिओ ॥

झिझस्य णे ॥४।१।७७॥

अस्योपधाया लोपः स्याण्णे परे । झीणं ॥

अतेष्ठस्थः ॥४।१।५४॥

अतेः परस्य ष्ठाधातोष्ठस्य थः स्यादितप्रत्यये । अइत्थियं । अतेरिति किम्? ठितं । अब्भुट्ठितं ॥

णुल्लस्येते ॥१।३।३४॥

अस्योकारस्य वृद्धिः स्यादितप्रत्यये परे । णोल्लियं । वा० (ते णुदो वक्तव्यः) णुन्नं । पणुन्नं ॥

निर्विभ्यां तरत्थरयोश्छस्तथयोस्ते ॥४।१।५५॥

क्रमेणाभ्यां परयोरनयोस्तकारथकारयोश्छकारः स्यात्तप्रत्यये । निच्छिण्णं । विच्छिण्णं । अवइण्णं । उत्तिण्णं । वितिण्णं । विइण्णं । संतिण्णं ॥

तिप्पादिप्पयोः पयोस्तः ॥४।१।५७॥

अनयोः पकारद्वयस्य तकारादेशः स्यात्तप्रत्यये निप्रत्यये च । तित्तं । दित्तं ॥

आतस्त्थरस्य त्थुः ॥४।१।५८॥

आकारोपसर्गात्परस्य त्थरधातोस्त्थु इत्यादेशः स्यात्तप्रत्यये । अत्थुरं । थद्धं ॥

त्थरमरहरेभ्यश्च ॥४।१।११॥

एभ्यः परस्य तप्रत्ययस्य डो वा स्यात् । उत्थडं, उत्थयं । वित्थडं । संथडं । भुयं । मयं । मडो । साहडं, साहयं । वा० (त्थरस्यैते रेफस्योपसंख्यानम्) । संथडियं ॥

उदस्थद्धस्य ॥४।१।५६॥

उदः परस्य थद्धस्यादेश्छकारः स्यात् । उच्छुद्धं ॥

दो दिद्दतौ ॥४।१।५९॥

दाधातोस्तप्रत्यये दिद् दत् इत्येतावादेशौ पर्यायेण भवतः । दिएणं, दिन्नं, दत्तं ॥

इतो दिससिरयोरद्वा ॥४।१।६१॥

दिससिरधात्वोरिकारस्याकारो वा स्यात्तप्रत्यये । दट्ठं, दिट्ठं । सट्ठं, सिट्ठं । निसट्ठं, निसिट्ठं ॥

समो दिहविहयोः ॥४।१।८१॥

समः परयोरनयोरुपधाया धकारः स्यात्तप्रत्यये । संदिद्धं । संविद्धं । आइत्तं, आदित्तं ॥

आतो दिहस्यादेर्लस्ते ॥३।४।१२॥

आतः परस्य दिहधातोरादेर्लकारो वा स्यात्तप्रत्यये परे । आलिद्धं, आइद्धं ॥

दुहनिहयोर्धः ॥४।१।८०॥

अनयोरुपधाया धकारः स्यात्तप्रत्यये । दुद्धं, निद्धं ॥

दहस्य ढौ ॥४।१।५२॥

दहधातुसम्बन्धिनोर्हकारनकारयोर्ढद्वयादेशः स्यात् । दड्ढं ॥

रुहक्विहयोरादेर्दीर्घः ॥४।१।६२॥

अनयोरादिस्वरस्य दीर्घः स्यात्तप्रत्यये। रूढं। दुरूढं। समभिरूढं। उव्वीढं। वा० (धुणस्य वा वक्तव्यः)। धूनं, धूयं। धुतं, धुयं।

नेरीः ४।१।६३॥

नेधातोरीकारोऽन्तादेशः स्यात्तप्रत्यये। नीयं अवणीयं॥

इराङ्निभ्याम् ॥४।१।६४॥

आनिभ्यां परस्य नेधातोरिकारः स्यात्तप्रत्यये परे। आणियं। णीणियं॥

पज्जक्विज्जयोर्ज्जयोर्दः ॥४।१।७८॥

पज्जक्विज्जधात्वोर्ज्जकारद्वयस्य दकारः स्यात्तप्रत्यये। पन्नं। अभिआपण्णं। अज्झोववण्णं। उप्पण्णं। णिप्फण्णं, णिप्पण्णं। निक्विन्नं॥

पयलुंचसुस्सेभ्यस्तस्य कः ॥४।१।६५॥

एभ्यः परस्य तप्रत्ययस्य कादेशः स्यात्। पक्कं। लुक्कं। सुक्कं। परिसुक्कं॥

पुच्छतच्छतक्खासिरेभ्यश्च ॥४।१।१७॥

एभ्यः परस्य तप्रत्ययस्य टः स्यात्। पुट्ठं। तट्ठं। अभिणिसिट्ठो॥

निरः पुच्छस्यादुतः ॥४।१।१४॥

निरः परस्य पुच्छधातोरुकारस्याकारो वा स्यात्तप्रत्यये। तिप्पट्ठं॥

पवस्य पुः ॥४।१।१३॥

पवधातोः पु इत्यादेशः स्यात्तप्रत्यये । उपप्पुयं ॥

फासस्य पुसस्ते ॥४।१।१२॥

फासधातोः पुस इत्यादेशः स्यात्तप्रत्यये परे । पुट्ठं, फासियं ॥

फुसस्य फुडः सतस्य ॥४।१।६७॥

तप्रत्ययसहितस्य फुसधातोः फुडादेशः स्यात् । फुडं ॥

भीस्ते ॥३।१।११८॥

बीहधातोर्भी इत्यादेशः स्यात्तप्रत्यये । भीयं ॥

भंजमज्जरुजाविजेभ्यो गस्तस्य ॥४।१।७३॥

एभ्यः परस्य तप्रत्ययस्य गः स्यात् । भग्गो । विग्गो । नव्विग्गो । संविग्गो । ओलुग्गो । ओरुग्गो । "उः करादीना-" मित्युकारविकल्पे, उम्मुग्गो, उम्मग्गो । निम्मग्गो ॥

भरस्य हुः ॥४।१।७०॥

भरधातोर्हु इत्यादेशः स्यात्तप्रत्यये । निहुतं । परहुओ ॥

भवपसवहवानामूसवस्य तत्योः ॥४।१।३६॥

एषामवस्योसादेशः स्यात्तप्रत्ययतिप्रत्यययोः । भूयं, अणुभूयं । अभिभूतं । पसूयं । अणुहूयं ॥

समष्ठो मज्जात् ॥४।१।७४॥

संपूर्वकमज्जधातोः परस्य तप्रत्ययस्य ठः स्यात् । संमट्ठं ॥

मन्नस्य नयोः ॥४।१।७६॥

मन्नधातोर्नद्वयस्य लोपः स्यात्तप्रत्यये । अणुमतं । अभिमओ ॥

मुंचरिचच्छिवविचेभ्यो वा ॥४।१।६६॥

एभ्यः परस्य तप्रत्ययस्य को वा स्यात्। मुक्को, मुत्तो। परिमुक्को॥ विमुक्को। रिक्कं, रित्तं। पइरिक्कं, पइरित्तं। छिक्कं, छित्तं। विविक्कं, निवित्तं॥

ते ढत् ॥३।३।४६॥

आकारात्परस्य रंभधातोर्ढत् इत्यादेशो वा स्यात्तप्रत्यये परे। आढत्तं, आरद्धं। केवलस्याकारस्य ग्रहणान्नेह, पारद्धं॥

*चुयादिभ्यो लोपः ॥४।१।२४॥

एभ्यः परस्य तप्रत्ययस्य लोपः स्यात्। चुयं, चुक्कं। झामं। णिच्चुड्डं। लग्गो। पलोट्टो। विल्हियं॥

लुंपस्य लोवः प्रेरणायाम् ॥४।१।६८॥

लुंपधातोर्लोवादेशः प्रेरणायाम्। आलोवियं॥

वड्ढस्येततिषु ॥४।१।३३॥

अस्यादेरकारस्योकारः स्यादिततिप्रत्ययेषु। वुड्ढो॥

वरहराभ्यां च ॥४।१।७॥

वरहराभ्यां परस्य तप्रत्यस्य डः स्यात्। वावडो। हडो। अभिहडो। अवहडो। उद्धुडो। उदाहडो। णीहडो॥

वरस्याव्यापारे ॥४।१।३६॥

वरधातोरादेरकारस्योकारः स्याद् व्यापारभिन्नेऽर्थे। वुडो। अभिणिव्वुडो। परिवुडो। संवुडो॥

* चुय, चुक्क, ज्झाम, णेच्, वुड्ड, लग्ग, लोट्ट, ल्हिय, वड्ढ, इति चुयादयः॥

निरो वा ॥४।१।२७॥

निरः परस्माद्वरधातोः परस्य तप्रत्ययस्य डो वा स्यात्। निव्वुडं, निव्वुयं ॥

वरसे रस्य ॥४।१।२५॥

वरसधातौ रस्य लोपः स्यात्ते। वुट्ठो। पवुट्ठो ॥

ते वस्योस् ॥४।३।३७॥

वसधातोर्वस्योसादेशः स्यात्तप्रत्यये। पउत्थो ॥

इते वा ॥४।३।३८॥

वसधातोर्वस्योसादेशो वा स्यादितप्रत्यये। उसियं, वसियं। परिउसियं, परिवसियं। वुसियं। विवसियं ॥

दोसीणस्तान्तस्य सपरेः ॥४।३।३६॥

वसधातोस्तान्तस्य परिसहितस्य दोसीण इति निपात्यते। दोसीणं ॥

वहस्योहस्ते ॥४।१।६६॥

वह्धातोरूढ इत्यादेशः स्यात्तप्रत्यये परे। ऊढं। उ+वि+वह्=उव्वूढं। निव्वूढं ॥

अन्वातो विसस्यादेः ॥४।१।२६॥

अनुपूर्वकाकारात्परस्य विसधातोरादेर्लोपः स्यात्तप्रत्यये। अण्णाइट्ठं ॥

सरादुपसर्गाड्डढौ ॥४।१।८॥

उपसर्गपूर्वकसरधातोः परस्य तप्रत्ययस्य डकारढकारौ पर्यायेण वा स्तः। अभिनिस्सडो। ऊसडो, ऊसढो। समा-

इते सिंचस्य सिङ्कः ॥४।१।७२॥

सिंचस्य सिङ्कादेशः स्यादिते परे । उस्सिङ्कियं । निसिङ्कियं ॥

सुत्ते वा ॥१।३।६५॥

पकारोपसर्गस्य दीर्घो वा स्यात्तप्रत्ययान्तसुयधातौ परे । पासुत्तो, पसुत्तो ॥

उदातो हरस्य सतस्य वा ॥४।१।७१॥

उत्पूर्वकाकारात्परस्य हरधातोस्तप्रत्ययसहितस्य हु इति वा निपात्यते ॥ उदाहु । उदाहडं, उदाहरियं ॥

समो हरस्य हो घः ॥४।१।८५॥

संपूर्वकस्य हरधातोर्हस्य घो वा स्यादितप्रत्यये परे । उवसंघियं ॥

हरिसस्यारः ॥४।१।२८॥

हरिसधातोररो लोपः स्यात्तप्रत्यये । हिट्ठो। पहिट्ठो॥

वेरूढो वा णे ॥४।१।८६॥

वेः परस्य ह्राधातोरूकारान्तादेशो वा स्याण्णप्रत्यये । विरूणं, विहीणं ॥

॥ इति कृदन्ते भूतार्थप्रक्रिया ॥



## अथ कृदन्ते कर्त्रर्थप्रक्रिया ॥

अणिदिण्ककण्तारा: कर्त्तरि ॥४।२।१॥

कर्त्तरि वाच्ये धातोरण् इन् इण् क कण् तार एते प्रत्यया

यथाप्रयोगं स्युः। सुवण्णगारो। मणिकारो। आउट्टी। अभिकंखी। उवगारी। परिक्खेवी। समज्जगो। अब्भंगावए। परियरगो, पडियारगो। कारको। विक्खेवए॥

ककणोः स्त्रियामिट् ॥४।४।५७॥

अनयोः स्त्रियामिडागमः स्यात्। उवासिया। संगाहिया संचालिया। राहाविया। कम्मइया। बिसोहिया। स्त्रियामिति किम्? उवासगो॥

एस्तारे ॥३।२।२६॥

अहेः परस्येधातोरेकारः स्यात्तारप्रत्यये। अज्झेयारो। अहिज्जगो। अज्झावए॥

भविष्यति ससिस्सेणितः ॥४।२।२॥

भविष्यदर्थे कर्त्तरि धातोः स स्सि स्स इण् इत् प्रत्ययाः स्युः॥

सादौ च ॥३।२।२७॥

इधातोरेकारादेशः स्यात्ससिस्सप्रत्ययेषु। आएसं॥

इक्खादिभ्यो णणणौ ॥४।२।४॥

इक्खादिभ्यो धातुभ्यः कर्त्तरि णप्रत्ययो णणप्रत्ययश्च स्यात्। जणणी॥

वेर्णे ॥३।१।१४६॥

वेः परस्येक्खधातोरिकारस्य यकारः स्याण्णप्रत्यये परे। पवियक्खणो। वियक्खणो॥

---

* इक्ख, जण, जाय, नि-हुह, उत्तास, धाव, दोह, विज, प-वेस, एते इक्खादयः॥

इरस्ताच्छील्ये ॥४।२।५॥

ताच्छील्येऽर्थे कर्त्तरि धातुभ्य इरप्रत्ययः स्यात् । अक्कन्दिरो । णच्चिरो । उम्मीलिरो ॥

तान्मन्तो भूते॥४।२।८॥

तप्रत्ययान्ताद्भूते कर्त्तरि मन्तप्रत्ययः स्यात् । कयवं, कयवन्तो । चिराणवं,चिराणवंतो । सुयवं, सुयवन्तो ॥

करणे णः॥४।२।१४॥

करणेऽर्थे धातोर्णप्रत्ययः स्यात् । करणं । कारणं॥

अच् करादिभ्यः कर्मणि॥४।२।११॥

कर्तरि करादिभ्योऽच्प्रत्ययः स्यात् कर्मण्युपपदे ॥

अजन्तेऽतेऽनुस्वारः॥४।२।१२॥

अच्प्रत्ययान्ते धातौ परेऽकारान्तोपपदस्यानुस्वारान्तागमो वा स्यात् । तित्थंकरो, तित्थयरो, तित्थकरो । आयंतमो, आयंदमो । परंतमो । जुगंधरो । पुरंदरो ॥

कारादिषु च ॥४।२।१३॥

कारादिशब्देषु च परेषु पूर्वस्यानुस्वारान्तागमः स्यात् । ओंकारो । भयंतारो ॥

एस्तारे क्विणजिणयोरिणस्य ॥४।२।२४॥

क्विणजिणधात्वोरिणस्यैसादेशः स्यात्तारप्रत्यये परे । विक्केयारो । जेयारो ॥

आतो यक् के ॥३।१।१५९॥

आतः परस्य क्खाधात्वोर्यगागमः स्यात्कप्रत्यये । [illegible]क्खायगो॥

विंयाभ्यां हिः के ॥३।१।१५६॥

विआपूर्वकस्य क्त्वाधातोर्हि इत्यादेशः स्यात्क्तप्रत्यये। वियाहियं ॥

गज्जादिभ्यस्तारस्य ड्डिरिटौ ॥४।२।२५॥

गज्जादिभ्यः परस्य तारप्रत्ययस्यादेर्ड्डित्वं चकारादिडागमः स्यात्। गज्जित्तारो। पगब्भित्तारो ॥

गज्जादिभ्य एट् सादीनाम् ॥४।४।५६॥

गमादिधातुभ्यः परेषां सादिप्रत्ययानामेडागमः स्यात्। आगमेसो, आगमिस्सो, आगमेसी, आगमी, आगामी। आविस्सो ॥

गमस्य गो वाऽचि ॥४।२।२७॥

गमधातोर्ग इत्यादेशो वा स्यादचिपरे। तुरंगो, तुरंगमो ॥

ओतो घट्टस्यादेर्हः के ॥४।२।२८॥

ओकारोपसर्गात्परस्य घट्टधातोरादेर्हकारः स्यात् क्तप्रत्यये [illegible]। ओहट्टए ॥

घातस्य घंतुघन्नू ॥४।२।२६॥

घातधातोः कर्त्तरि घंतु घन्नु इति वा निपात्येते। घंतू, घन्नू। घाती, घाई। घातए, घायए ॥

चालादियः ॥४।२।६॥

चालधातोः कर्त्तरीयप्रत्ययः स्यात्। उच्चालइए ॥

---

१ गज्ज, प-गब्भ, नि-गिण्ह, चिट्ठ, उद्-छोल, जग्ग, परा-जिग्ग, नि-ज्झा, उद्-ताम, उद्-दम, प-भार, नि-मव, वरस, आ-हार, एते गज्जादयः।

जणादत्पञ्चमीसप्तम्योर्जो जणस्य ॥४।२।२१॥

पञ्चम्यन्ते सप्तम्यन्ते चोपपदे जणधातोरत्प्रत्ययः स्याज्ज-णस्य जादेशश्च । अंगया । पंकजं ॥

जयस्य वः काणि जये ॥४।२।५१॥

जयेऽर्थे वर्त्तमानस्य जयधातोरुपधाया वकारः स्यात्काणि परे । जावए ॥

जाणपलिमंथसहेभ्यो डुः ॥४।२।२२॥

एभ्यो डुप्रत्ययः स्यात्कर्त्तरि । जाणू । पलिमंथू । सहू ॥

जावस्य यः ॥४।२।३५॥

आवप्रत्ययान्तजाधातोर्वस्य यकारः स्यात् कप्रत्यये । या-वए ॥

इणि जुञ्झस्य जझयोः ॥४।२।२९॥

जुञ्झधातोर्जकारझकारयोरीकारः स्यादिणप्रत्यये । जोही ॥

इणणोर्जुंजस्य गश्च ॥४।४।११९॥

जुंजधातोरुपधाया गकारः स्याच्चकारादनुस्वारलोपोऽणप्रत्ययेणप्रत्यययोः परयोः । जोगी । अनुजोगी । संजोगी ॥

ट्ठो डः ॥४।२।१७॥

अधिकरणे उपपदे ट्ठाधातोर्डप्रत्ययः स्यात् । देहत्थो । अंयट्ठो ॥ उपधाया इत्यधिकृत्य,

नेर्दुहस्य वो णे ॥४।२।५०॥

नेः परस्य दुहधातोरुपधाया वकारः स्याएणप्रत्यये । "नि-दुवणं"[1]

[1] निष्ठीवनम् । (ठा० ५-१) ।

पञ्चम्यां त्तो रः ॥४।२।१५॥

पञ्चम्यन्त उपपदे त्ताधातो रप्रत्ययः स्यात्। भयंतारो ॥

त्थुणस्य थवोऽणकेषु ॥४।२।४०॥

त्थुणधातोस्थवादेशः स्याद् अ-ण-क-प्रत्ययेषु। थवण॥

दश्च ॥३।१।१६०॥

दाधातोर्यगागमः स्यात्कप्रत्यये परे। दायगो, दायण ॥

दिसस्य दक्खुः ॥४।२।३७॥

दिसधातोः कर्तरि दक्खु इति वा निपात्यते। दक्खू। देसी। देसगो। दट्ठारो ॥

आतो दीवस्य दो लः कणततेषु ॥१।४।९९॥

आकारात्परस्य दीवधातोरादेर्लकारादेशो वा स्यात्क-ण-त-इतप्रत्ययेषु परेषु ॥

वस्य यो वा ॥१।४।१०१॥

आकारात्परस्य दीवधातोर्वस्य यो वा स्यात्कप्रत्यये। आलीयगो, आलीवगो ॥

पञ्चवपज्जभुंजवञ्चानां तारे ॥४।४।१२०॥

एषामन्त्यस्य लोपः स्यात्तारे परे। पजत्तारो। भोत्तारो ॥

उपपदान्नावियाभ्याम् ॥४।२।२३॥

उपपदपूर्वकाभ्यामाभ्यां डुप्रत्ययः स्यात्कर्त्तरि। धम्मन्नू। पारविऊ ॥

नस्साद्रः ॥४।२।६॥

अस्मात्ताच्छील्येऽर्थे कर्त्तरि रप्रत्ययः स्यात्। नस्सरो॥

नेर्न्हवस्य ण्हः के ॥४।२।४६॥

नेः परस्य न्हवधातोर्ण्ह इत्यादेशः स्यात्के परे। णिण्हगो, णिण्हगे ॥

पासस्येति ॥३।१।७९॥

पासधातोरुपधाया इत्वं स्यादिति। पस्सी ॥

इण्‌अण्‌कण्‌प्रेरणासु बुज्झस्य ॥४।२।३०॥

इण्-अण्-कण्-प्रेरणासु बुज्झधातोर्ज्झयोर्हकारः स्यात्। बोही, बोहए ॥

पाब्भवादिंसुः ॥४।२।७॥

पपूर्वकभवधातोस्ताच्छील्येऽर्थे इंसुप्रत्ययः स्यात्। पभविंसू ॥

संमज्जात्तलोपे ॥४।२।२६॥

अस्मात्परस्य तारप्रत्ययस्येडागमः स्यात्तकारस्य लोपे। संमज्जियारो ॥

अधिकरणेऽण् ॥४।२।१६॥

अधिकरणेऽर्थे धातोरण्प्रत्ययः स्यात्। आरमन्तेऽस्मिन्नित्यारामो ॥

लाभेच्छावति लिच्छुः ॥४।२।३९॥

लाभेच्छाकर्त्तरि लिच्छु इति निपात्यते। लिच्छू ॥

लिंपादडः केवलात् ॥४।२।३॥

उपसर्गरहिताल्लिंपधातोः कर्त्तरि अडप्रत्ययः स्यात् ॥

लिंपस्य लेवोऽडकाणेषु ॥४।२।४३॥

लिम्पधातोर्लेवादेशः स्यादड-क-अ-ण प्रत्ययेषु । लेवडो । उवलेवए ॥

इति पाद्धः ॥३।१।१७२॥

पपूर्वकवत्तधातोर्वकारस्य गकारः स्यादिति । पागद्दो ॥

इतारयोर्वरसस्य वासः ॥४।२।३७॥

वरसधातोर्वासादेशः स्यादिप्रत्ययतारप्रत्यययोः । वासित्तारो । वासी ॥

वसात्तव्वः ॥४।२।१०॥

वसधातोः कर्त्तरि तव्वप्रत्ययः स्यात् । वत्थव्वो ॥

पाभ्यां के रलोपः ॥४।२।४८॥

पआपूर्वकस्य वरसधातो रस्य लोपः स्यात्कप्रत्यये । पावसए ॥

वियस्य विः ॥४।२।३८॥

वियधातोः कर्त्तरि वि इति वा निपात्यते । वी । धम्मवी । नाणवी । पक्षे, धम्मविऊ । नाणविऊ ॥

निसदसयाभ्यां जाड् ॥४।२।१८॥

निपूर्वकसद्धातुसयधात्वोरधिकरणेऽर्थे जाड्प्रत्ययः स्यात् ॥

इर्जाड्यतः ॥४।२।१९॥

जाडि परे धातोरादेरकारस्येकारो वा स्यात् । निसिज्जा, निसज्जा ॥

सयस्यैः ॥४।२।२०॥

सयधातोरादेरकारस्यैकारः स्यात् । सेज्जा, अभिसेज्जा ॥

आतः सवस्यौणि ॥३।१।८३॥

आकारान्तस्य सवधातोरादेर्द्वित्वं स्यादिणूप्रत्यये । अस्सावी ॥

सुवस्येणि सः ॥४।२।४९॥

सुवधातोरिणप्रत्यये स इत्यादेशः स्यात् । साई ॥

॥ इति कृदन्ते कर्त्रर्थप्रक्रिया ॥

## अथ कृदन्ते भावकर्मप्रक्रिया ॥

योग्यशक्ययोर्मिणिज्जणीयतव्वाः ॥३।४।१३॥

अकर्मकेभ्यो भावे सकर्मकेभ्यः कर्मणि योग्यशक्ययोर-र्थयो-र्म-णिज्ज-णीय-तव्वप्रत्ययाः स्युः । खाइमं । संघातिमं । अच्चणिज्जं । एसणीयं । पडिकम्मियव्वं । पच्चक्खाणयव्वं ॥

पावगोवच्छिवठवसवेभ्यः पट् ॥३।४।१४॥

एभ्यो भावकर्मणोः पट्प्रत्ययः स्यात् । पप्पं । गुप्पं । छिप्पं । ठप्पं । आणप्पं । वा० (असाल्लण् भक्ष्ये वक्तव्यः) आसलं ॥

वस्य तव्वे लोपः ॥३।२।२८॥

आहेरुपसर्गात्परस्यैधातोरादेर्वस्य लोपः स्यात्तव्व-प्रत्यये परे । अज्झाइयव्वं ॥

पत्तेरेरः ॥३।४।१५॥

पत्तिइरेकादिधातोः कर्मण्यप्रत्ययः स्यात् । पत्तियं ॥

करादियणाचडौ ॥३।४।१६॥

करधातोरियणाचडूप्रत्ययौ स्तः । कारिगं । कव्वं ॥

## क्रिणादिभ्य इयः ॥३।४।१७॥

क्रिणादिभ्यो धातुभ्य इयप्रत्ययः स्यात्कर्मणि। विक्किणेयं। आयरियं। आदेयं। भविय। अक्कन्तेयं। विलेयं। मेयं। पमेयं। धेयं। वा० (क्रिणस्योमियतव्वेष्विणस्य लोपो वाच्यः) विक्किय॥

## डिच्चडित्तिमौ कः ॥३।४।१८॥

काधातोः कर्मणि डिच्चडित्तिमप्रत्ययौ भवतः। किच्चं। कित्तिमं॥

## क्रिणसंखाभ्यामिज्जः ॥३।४।१९॥

आभ्यामिज्जप्रत्ययः स्यात् कर्मणि। किज्जं। संखिज्जं, संखेज्जं॥

## खिवाद्वा सेटो वस्य लोपश्च ॥३।४।२८॥

अस्मात्परस्तव्वप्रत्ययो डिदनिट् णिच्च वा स्यादिट्सहितस्य वस्य लोपश्च। निक्खेत्तव्वं। उवणिक्खियव्वं॥

## दिसबुज्झवहेभ्यस्तव्वो डिदानिण्णितः ॥३।४।२७॥

एभ्यः परस्तव्वप्रत्ययो डित् णिदनिट् च स्यात्। दट्ठव्वं। बोद्धव्वं। निव्वोढव्वं॥

## खो डज्जः ॥३।४।२०॥

खाधातोर्डज्जप्रत्ययः स्यादुक्तेऽर्थे॥

## जयोर्धौ वा ॥३।४।२१॥

खाधातोः परस्य डज्जप्रत्ययस्य जकारयोर्धकारद्वयादेशो वा स्यात्। खद्धं। खज्जं॥

गमादिभ्यो डः ॥३।४।२२॥

एभ्यो भावकर्मणोर्डप्रत्ययः स्यात् ॥ उपधाया इत्यधि कृत्य,

गिण्हादीनां डे द्विः ॥३।४।२६॥

एषामुपधाया द्वित्वं स्याद् डप्रत्यये परे । गम्मं । घत्तं । भज्जं । मेज्जं ॥

गिण्हडहदुहदहाराहसाहानां झः ॥३।४।२७॥

एषामुपधाया झकारः स्याड्डप्रत्यये । गिज्झं । दज्झं । आरज्झं । सज्झं । डज्झं ॥

णाणिज्जयोर्जिघः ॥३।१।९३॥

ग्घाधातोर्जिघादेशः स्यात् णा-णिज्जप्रत्यययोः । जिघणिज्जं ॥

एज्जो डे ॥४।४।१०४॥

छिद्भिद्धात्वोरिद्भागस्यैज्जादेशः स्याड्डप्रत्यये । छेज्जं । भेज्जं ॥

ज्झामाभ्यामेज्जः ॥३।४।२४॥

आभ्यामेज्जप्रत्ययः स्यादुक्तेऽर्थे । मेज्जं ॥

एज्जे झो धः ॥३।४।२६॥

ज्झाधातोर्झस्य धः स्यादेज्जप्रत्यये । धेज्जं, धिज्जं ।

१ गम, गरिह, गिण्ह, घात, छिद्द, च्छुभ, जुंज, डह, दुह, दह, पूज, फुस, नि-भम, भव, भुंज, रम, आ-राह, वच्च, सलह, साह, सेव, नि-हण, हुण, एते गमादयः ॥

२ गिण्ह, गम, घात, च्छुभ, जुंज, दुह, दह, पास, पूज, भम, भव, भुंज, रम, आ-राह, भिद, सलह, साह, सिच, सेव, हुण, एते गिण्हादयः ॥

मे तरस्य ॥१।३।३५॥

तरधातोरादेरकारस्य वृद्धिः स्यान्मप्रत्यये । तारिमं ॥

तव्वे थोः ॥४।२।४२॥

स्थुगाधातोस्थो इत्यादेशः स्यात्तव्वप्रत्यये । थोअव्वं ।

आतो दो वा ॥३।४।२५॥

आपूर्वकदाधातोरेज्जप्रत्ययो वा स्यात् । आइज्जं, आदिज्जं, आदेज्जं, आयाणिज्जं ॥

चछुभदुहभुंजसिंचानां डे ॥१।३।२६॥

एषामिदुतोर्वृद्धिः स्याड्डे परे । छोभ्भं । दोज्झं । भोज्जं । वा० ( भुंजस्य डग्गोवक्तव्यः ) । जोग्गं ।

पादुहंसस्य डे दधयोः ॥४।२।३४॥

पादपरस्य हंसधातोर्दकारधकारयोर्हकारः स्याड्डे । दुप्पहंसं ॥

इये सदो धो ढः ॥३।४।४०॥

सदः परस्य धाधातोरादेर्ढकारः स्यादियप्रत्यये परे । सद्दढियं ॥

सुदुभ्यां च ॥३।४।२३॥

आभ्यां परेभ्यो धातुभ्यो डप्रत्ययः स्याद् भावकर्मणोः । दुक्कुरो । दुप्परसो । सुल्लहो । दूसहो ॥

नेर्यः ॥३।४।२६॥

नेधातोर्यप्रत्ययः स्यात्कर्म्मणि । विणेयं ॥

विदस्य जः ॥३।४।३८॥

अस्योपधाया जः स्याद् डप्रत्यये । वा० (विदाड्डो णिद्वक्तव्यः ) वेज्जं ॥

मे लुणस्य लाः ॥३।४।३०॥

लुणधातोर्ला इत्यादेशः स्यान्मप्रत्यये । लाइमं ॥

वसात्तव्वस्य ॥३।१।२७॥

अस्मात्परस्य तव्वप्रत्ययस्येडागमो वा स्यात्। वसित्तए, वत्थए ॥

सलहस्य सघो डे ॥३।४।३१॥

सलहधातोः सघादेशः स्याद् डप्रत्यये । सग्घं ॥

सिंचस्य को णिच्च डः ॥३।४।३६॥

अस्योपधायाः ककारः स्याद् डप्रत्यये डप्रत्ययो णिच्च । अभिसेक्कं ॥

नेर्हणस्य हः ॥३।४।३२॥

नेः परस्य हणधातोर्हादेशः स्याद् डप्रत्यये परे । निहो।

सणिज्जहरस्य हेज्जः ॥३।४।३३॥

हरधातोर्णिज्जप्रत्ययसहितस्य हेज्ज इत्यादेशः स्यात्। हेज्जं ॥

हुणस्य हवः ॥३।४।३४॥

अस्य धातोर्हवादेशः स्याद् डप्रत्यये । हव्वं ॥

होस्तव्वस्येव्वः ॥३।४।३५॥

होधातोः परस्य तव्वप्रत्ययस्येव्व आदेशो वा स्यात् । होइव्वं, होयव्वं ॥

॥ इति कृदन्ते भावकर्मप्रक्रिया ॥

# अथ कृदन्ते भावार्थप्रक्रिया ।

## भावेऽणदाणणातयः ॥४।३।१॥

धात्वर्थस्वरूपे भावे वाच्ये धातुभ्योऽण्-अन्-आ-णा-ता-तिप्रत्ययाः स्युः । तत्र, आणातिप्रत्ययान्ता स्त्रीलिङ्गाः । अवयारो । आक्खेवो । अवगमो । अभिगमो, अहिगमो । अणुप्पेहा । अब्भंगणं । उव्वंजणं । पज्जुवासणा । पसी ॥

## अप्पाहहाभ्यां णिः ॥४।३।२॥

आभ्यां भावे णिप्रत्ययः स्यात् । अप्पाहणी । हाणी ॥

## आसे परयोर्वचौ वा ॥४।१।५॥

वेः परस्य परेरुपसर्गस्य पकाररेफयोः क्रमेण वकारचकारौ वा भवतोऽकारप्रत्ययान्तासधातौ परे । विवच्चासो, विवज्जासो, विपरियासो ॥

## अत्यभिप्पाभ्यामयति ॥३।२।२९॥

अति-अभिप्पाभ्यां परस्येधातोरयादेशः स्यादणि परे । अच्चओ । अभिप्पाओ ॥

## वा णे ॥३।२।२४॥

अहेः परस्येधातोरयादेशो वा स्याण्णप्रत्यये परे । अज्झयणं । पक्षे,

## अहेज्झो दीर्घो धातोः ॥३।२।२५॥

अहेरन्त्यस्य झकार इधातोर्दीर्घः स्याण्णप्रत्यये । अज्झीणं ॥

इभाड्डो वा ॥४।३।१८॥

इभाद्ग्रहस्य ङिप्रत्ययस्यादिर्डो वा स्यात् । इड्डी, इड्ढी।

उट्टादिभ्यो ङिः ॥४।३।३॥

एभ्यो ङिप्रत्ययः स्याद्भावे । आउट्टी । अणुकड्ढी । पयट्टी । विणोट्टी । मोट्टी । उपकाया इत्यभिकृत्य,

पाउणस्य रो णे ॥४।३।५२॥

पापूर्वकस्योणधातोरुपधाया रेफः स्याण्णप्रत्यये परे । पाउरणं ॥

उसस्याति ॥३।१।७६॥

आङः परस्योसधातोरुपधाया छित्वं नित्यं स्यादप्रत्यये । आउस्सा ॥

खिज्जादिभ्य इयः ॥४।३।१२॥

एभ्य इयप्रत्ययः स्याद्भावे । जीवियं । तुरियं । खिज्जियं । चरिया । जागरिया ॥

करस्येदिये ॥४।३।१४॥

करधातोरादेरकारस्येकारः स्यादियप्रत्यये । किरिया ॥

आनिभ्यो लोवो रः ॥४।३।१६॥

एभ्यः परस्य करधातो रेफस्य लोपः स्यान्नौ परे ॥

* उट्ट, कड्ढ, कड्ड, णिउम्भ, वट्ट, वत्त, सुम्भ, एते उट्टादयः ॥

× खिज्ज, कर, चर, जागर, जीव, तुर, एते खिज्जादयः

## आतस्तौ वा ॥४।३।१५॥

आतः परस्य करधातोरादेरकारस्येकारो वा स्यात्तिप्रत्यये। आगिइ, आकिइ, आकिती, आगती ॥

## निपाभ्यां डस्तेरादेः ॥४।३।१७॥

निपपूर्वककरधातोः परस्य तिप्रत्ययस्यादेर्डकारो वा स्यात्। नियडी, नियती। पगडी, पगती ॥

## पाओरोः करेऽणयोः ॥४।३।२७॥

पाउशब्दस्यौकारान्तादेशः स्यादणप्रत्ययान्तकरधातौ परे। पाओकरणं। पाओअरो ॥

## उवादुपकरणे क्खरोऽति ॥३।१।१४०॥

उवात्परस्य करधातोः क्खर इत्यादेशः स्यादप्रत्यये। उवक्खरो ॥

## अवात्कसस्याणि को द्विः ॥४।३।२८॥

अवात्परस्य कसधातोरादेर्द्वित्वं स्यादणि। अवक्कासो ॥

## तेः कसादिभ्यः ॥४।१।१८॥

एभ्यः परस्य तिप्रत्ययस्य तकारस्य ठः स्यात् ॥

## ट्ठात्कसयोस्तौ ॥४।३।१६॥

ट्ठाधातोरुदः परस्य कसधातोश्चादेरकारस्येकारः स्यात्तौ। ठिती। उक्किट्ठी ॥

## उदोऽति द्विरनिटः ॥४।४।५४॥

उदः परस्य कसधातोरिडागमाभावे उपधाया द्वित्वं वा स्यादप्रत्यये। उक्करिसो, उक्कस्सो, उक्कसो ॥

* कस, तुस, भिस, पीस, सास, एते कसादयः।

## कीरस्य णमाणयोर्ह्रस्वः ॥४।३।२४॥

अस्य धातोरीकारस्य ह्रस्वः स्याण्णमाणप्रत्यययोः । किरणं । विकिरणं ॥

## संकुंचादिभ्यो णाणौ णित् ॥४।३।३२॥

एभ्यः परौ णाणप्रत्ययौ णितौ भवतः। संकोचणा । निक्खेवणं, निक्खेवणा । खोभणं, खोभणा । देसणं, देसणा। बोहणं, पबोहणा । मोयणं । अवसाणं। सोधणं। संसोधणं ॥

## समः कुंचस्य णे ॥४।४।११८॥

समः परस्य कुंचधातोरनुस्वारस्य लोपः स्याण्णप्रत्यये । संकोचणं ॥

## कुज्झस्याणणयोः ॥४।२।३१॥

कुज्झधातोर्जझयोर्हः स्यादणणप्रत्यययोः । कोहो, कोहणं ॥

## इदिणयोः खिवक्किणचिणानामयति ॥४।३।३४॥

एषामिकारस्येणस्य चायादेशः स्यादप्रत्यये । खओ । कओ । विक्कओ । चओ । अवचओ ॥

## खिवसाभ्यां डायः ॥४।३।६॥

आभ्यां भावे डायप्रत्ययश्च स्यात् । खाओ । साओ । ववसाओ ॥

× सम्-कुंच, कुज्झ, नि-क्खिव, खुभ, दिस, बुज्झ, अव-स, विज, विस, सुध, एते संकुंचादयः ॥

आतः क्खिवस्य कखयोर्णे ॥४।२।३२॥

आतः परस्य क्खिवधातोः कखयोर्हकारादेशो वा स्याण्णप्रत्यये ॥

आविभ्यां क्खिवाद्वा ॥४।३।२३॥

आविपूर्वकात्क्खिवधातोः परो णणप्रत्ययो णित्तो वा भवतः। आहेवणं, आक्खेवणं, अक्खिवणं। विक्खेवणं, विक्खिवणं ॥

समः खुभस्याति हः ॥४।३।६४॥

संपूर्वकस्य खुभधातोरुपधाया हकारः स्यादप्रत्यये। संखोहो ॥

तौ गमरयुणरमसरसुणहणानां लोपः ॥४।३।६५॥

एषामुपधाया लोपः स्यात्तौ परे। आगई। रत्ती। विरती। सई। सुई। पडिसुतो। हती। [illegible]। सुई ॥

गेहो गिज्झस्य ॥४।३।२३॥

गिज्झधातोर्गेहादेशः स्याद्धिप्रत्यये। गेही ॥

समो गोवस्य फः ॥४।३।५४॥

संपूर्वकस्य गोवधातोरुपधायाः फः स्यादति परे। संगोफो ॥

नेर्घातस्यादेः ॥४।२।२३॥

नेः [illegible] धातोरादेरीकारो वा स्यादप्रत्यये। विनिहातो, विनिघातो ॥

आति गस्य लोपः ॥३।१।६५॥

अस्य धातोर्गकारस्य लोपो वा स्यादाप्रत्यये ॥

आति चिगिच्छस्य ॥४।३।७॥

आप्रत्यये परे चिगिच्छधातोरादेर्द्विर्वा स्यात् । चिइच्छइ, तेगिच्छा । चिचिगिच्छा ॥

चिणस्याणण्योरिणस्याय: ॥३।१।६८॥

चिणधातोरिणस्यायादेशः स्यादणप्रत्यययोः परयोः । चयणं । उच्चयणं ॥

क्षयादाकः ॥४।३।५॥

क्षयधातोराकप्रत्ययोऽपि स्यात् । अपिशब्दाद्यथाप्राप्तम् ॥

आदेरिराके ॥४।३।६॥

आकप्रत्यये क्षयधातोरादेरकारस्येकारः स्यात् । चियागो, चियाओ, चाओ ॥

जुज्झात्तश्च ॥४।३।१०॥

जुज्झधातोर्भावे तप्रत्ययश्च स्यात् । जुद्धं, जुज्झं ॥

जोयस्य तौ यलोपश्च ॥४।३।२५॥

जोयधातोरोकारस्य ह्रस्वो यलोपश्च तिप्रत्यये । जुई, जुती ॥

त्थरथवयोर्वा योऽति ॥४।३।५३॥

अनयोरुपधाया यकारो वा स्यादप्रत्यये । उत्थओ । थओ, थवो, थवणं ॥

उदस्थंभस्य खंभः ॥४।३।४२॥

उदः परस्य थंभधातोः खंभादेशः स्यादप्रत्यये परे । उक्खंभो ॥

## दिस-पा-भुंज-लभ-वद्यानां स्वार्थेच्छायां दिदिक्खा-पिवासा-बुभुक्खा-लिच्छा-विवक्खाः ॥४।३।३१॥

एषां धातूनां स्वस्वार्थेच्छायामर्थे एते निपात्यन्ते । दिदिक्खा । पिवासा । बुभुक्खा । लिच्छा । विवक्खा॥

## धमस्य णावयोर्मस्य ॥४।३।२९॥

धमधातोर्मस्य द्वित्वं स्यात् ण-आवप्रत्ययोः । धम्मणं ॥

## उदो दीर्घो णे ॥४।३।३०॥

उदः परस्य धमधातोर्दीर्घोऽन्तादेशः स्यात् णप्रत्यये । उद्धमाणं ॥

## धरस्य धिः ॥४।३।२१॥

धरधातावरस्येसादेशः स्यात्तिप्रत्यये । धिई, धिती ॥

## उपसर्गाद्धः ॥४।३।४॥

उपसर्गपूर्वकाद्धाधातोर्डिप्रत्ययः स्याद्भावे । निही, निधी । विधी । विही । संधी । समाधी, समाही ॥

## अहेरुवादणि ॥३।२।११॥

अहिपूर्वकोवपूर्वकस्य पज्जधातोः पयादेशः स्यादणि परे । अज्झोववाओ ॥

## आतो जयोर्लोपस्तौ ॥३।२।१२॥

आतः परस्य पज्जधातोर्जकारयोर्लोपः स्यात्तिप्रत्यये परे । आवत्ती ॥

पयभजरुजानां गः ॥४।३।५६॥

एषामुपधाया गकारो वा स्याद्णि परे। पागो। पलिपागो। विभागो। भागो। विभागो। रोगो॥

फासस्य ह्रस्वश्च ॥४।४।५६॥

उपसर्गरहितस्य फासधातोः सकारस्य रिडागम आकारस्य ह्रस्वश्चाप्रत्यये परे। फरिसो॥

भयोऽतत्त्वमाणेषु ॥३।१।११७॥

बीहधातोर्भय इत्यादेशः स्याद् अ-तव्व-माणप्रत्ययेषु परेषु। भयं॥

भणात्तेः ॥३।१।२२॥

भणधातोः परस्य तिप्रत्ययस्येडागमः स्यात्। भणितो, भणिई॥

भुंजस्यानुस्वारलोपश्च ॥४।३।५७॥

भुंजधातोरनुस्वारस्य लोपश्चकारादुपधाया गकारादेशः स्याद्णि परे। भोगो। उवभोगो॥

उदो मज्जस्याऽऽतयोरुदतः ॥४।३।२६॥

उत्पूर्वकस्य मज्जधातोरादेरकारस्योकारो वा स्यादाप्रत्यये तप्रत्यये च। उम्मुज्जा, उम्मज्जा॥

आ मन्नात्करणे ॥४।३।७॥

मन्नधातोः करणेऽर्थे आप्रत्ययः स्यात्। मन्ना॥

आऽणुपेभ्यो मिलो ळ्वा णे ॥४।३।३५॥

एभ्यः परस्य मिलधातोर्ळ्वा इत्यादेशः स्यात् णप्रत्यये परे। अणुळ्वाणं। अळ्वाणं। पळ्वाणं॥

मुंचात्खण् अलोपश्च ॥४।३।८॥

मुंचधातोः खणप्रत्ययः स्याद्भावे धातोरकारस्य लोपश्च। मोक्खो। मोयणं॥

आतो मुसस्याणयोर्मरिसः ॥४।३।४०॥

आपूर्वकस्य मुसधातोर्मरिसादेशः स्यात् अ-णप्रत्ययोः। आमरिसो, आमरिसणं॥

वेरति वीमंसः ॥४।३।४१॥

वेः परस्य मुसधातोर्वीमंस इति निपात्यतेऽति परे। वीमंसो॥

रञ्जस्य जयोः ॥४।३।५८॥

रञ्जधातोर्जकारयोर्गकारः स्यादणि। रागो॥

णे रंगः ॥४।३।५९॥

रञ्जधातोर्णप्रत्यये रंगादेशः स्यात्। रंगणं॥

रुंभस्य रोहः ॥४।३।४७॥

रुंभधातो रोहादेशः स्यादतिप्रत्यये परे। ओरोहो॥

व्यातिभ्यां रिचस्य ॥४।३।६०॥

आभ्यां परस्य रिचधातोरुपधाया गकारादेशः स्यादण्-प्रत्यये। वइरेगो॥

लाउः सातेः ॥४।२।४५॥

अप्रत्ययसहितस्य लिपधातोर्लाउ इत्यादेशो वा स्यात्। लाऊ॥

अन्वाभ्यां वा णे ॥४।२।४४॥

अनुआपूर्वकस्य लिपधातोर्लेवादेशो वा स्यात् णप्रत्यये।

अनुलेवणं, अनुलिंपणं । आलेवणं, आलिंपणं ॥

लियस्य णतयोर्लेली ॥४।३।५१॥

लियधातोः क्रमेण ले ली इत्येतावादेशौ स्तो णप्रत्यय-तप्रत्यययोः परयोः । लेणं ॥

वत्तस्य डो ॥४।३।२२॥

अस्यादेरकारस्येकारो वा स्यात्तिप्रत्यये । वित्ती, वत्ती । आवित्ती, आवत्ती ॥

निव्वरवरसयोस्तौ ॥३।१।१७४॥

निरः परयोर्वरवरसधात्वोरारस्योत्वादेशः स्यात्तिप्रत्यये । णिव्वुई, णिव्वुत्ती । वुट्ठी ॥

अवपरिभ्यामूसो वसस्य ॥४।३।३६॥

आभ्यां परस्य वसधातोरूस इत्यादेशः स्याणगप्रत्यये । अवऊसणं । पज्जूसणं ॥

वेर्विचस्य कोऽणि ॥४।३।५५॥

वेः परस्य विचधातोरुपधायाः कादेशः स्यादणि परे । विवेगो, विवेको ॥

विजस्याऽणयोः ॥४।३।६१॥

विजधातोरुपधाया गकारोऽणि णे च । वेगो । उव्वेओ, उव्वेगो । संवेगो, संवेगणं ॥

आति पादू व्वयस्य ज्जः ॥४।३।६३॥

पपूर्वकव्वयधातोरुपधाया ज्जादेशः स्यादाप्रत्यये । पव्वज्जा ॥

सज्जस्य जयोर्गौ ॥४।३।४३॥

सज्जधातोर्जकारद्वयस्य गकारद्वयादेशः स्यादप्रत्यये इप-

स्यये च । सग्गो । उस्सग्गो । संसग्गो ॥

आणिज्जयोः सलहस्य सिलाहसलाहौ ॥४।३।४४॥

सलहधातोः क्रमेण सिलाहसलाहादेशौ स्त आप्रत्यये णिज्जप्रत्यये च परे । सिलाहा, सलाहा ॥

सासस्यातः ॥४।३।२०॥

सासधातोराकारस्येकारो वा स्यात्तौ परे । सिट्ठी । अणुसिट्ठी । अणुसट्ठी ॥

सिंचस्य सेकः ॥४।३।४५॥

सिंचधातोः सेकादेशः स्यादप्रत्यये । सेओ, अभिसेओ ॥

ईतः सिलीसस्यैत् ॥४।३।४६॥

अस्येकारस्यैकारः स्यादप्रत्यये । सिलेसो ॥

सुणस्य सवो णे ॥४।३।४६॥

सुणधातोः सवादेशः स्याण्णप्रत्यये । सवणं ॥

सोयस्य वा ॥४।३।६२॥

सोयधातोरुपधाया गकारादेशो वा स्यादप्रत्यये । सोगो, सोओ ॥

हणाच्चाट् ॥४।३।११॥

हणधातोर्भावे चाट्प्रत्ययः स्यात् । हच्चा ॥

उपसर्गाद्धणस्याऽऽति हः ॥४।३।४८॥

उपसर्गात्परस्य हणधातोर्हादेशः स्यादाति परे । पडिहा । विनिहा ॥

हिंसाद् या च ॥४।३।१२॥

हिंसधातोर्भावे याप्रत्ययोऽपि स्यात् । हिंसया, हिंसा ॥

हुणस्य हवो वा ॥४।३।५०॥

हुणधातोर्हवादेशो वा स्यात् णप्रत्यये परे। हवणं, हुणणं ॥

॥ इति कृदन्ते भावार्थप्रक्रिया ॥



यावन्तो यौगिकाः शब्दा लब्धा जैनागमे खलु ।
ते सर्वे साधिताः प्रायः, सूत्रैरत्र [illegible] ॥१॥
रूढेषु विकृता वर्णैर्देशकालादिभेदतः ।
विकृतिर्दर्शिता तेषां, स्वरव्यञ्जनयोः क्रमात् ॥२॥
गणोषूह्याः स्वयं प्राज्ञैर्लभ्येरन् ये तथाविधाः ।
शेषा निपातसंसिद्धा द्रष्टव्याः शब्दसंग्रहे ॥३॥

प्रशस्तिः ।

वर्षे चन्द्रदिशानिधिक्षितिमिते श्रीविक्रमस्याश्विने,
मासे शुक्लदले शरद्विलसिते तिथ्यां दशम्यां कुजे ।
श्रीमत्स्वामिगुलाबचन्द्रचरणाम्भोजालिरत्नेन्दुना,
स्थित्वा श्रीवढवाणकेम्पनगरे पूर्णीकृता कौमुदी ॥१॥

॥ इति श्रीलोङ्कागच्छान्तर्गतलिम्बडीसम्प्रदायति-
लकायमानपूज्यपाद-श्रीगुलाबचन्द्रजित्स्वा-
मिचरणाम्बुजचञ्चरीक-मुनिश्री-रत्नचन्द्र-
विरचितायां जैनसिद्धान्त-
कौमुद्यामुत्तरार्द्धं
समाप्तम् ॥

॥ इति श्री जैनसिद्धान्तकौमुदी [अर्द्धमागधीव्याकरणं]
समाप्तिमगात् ॥

ॐ

# सूत्रपाठः ॥

## प्रथमोऽध्यायः ॥

### प्रथमः पादः ॥

१ अआइईउऊएओ स्वराः ॥ २ कखगघङ चछजझञ-टठडढण-तथदधन-पफबभम-यरलवसहा व्यञ्जनानि ॥ ३ अ-इउ ह्रस्वाः ॥ ४ आईऊ दीर्घाः ॥ ५ वर्णोपरि बिन्दुरनुस्वारः ॥ ६ स्वराणामन्त्यष्टिः ॥ ७ अन्त्यात्पूर्व उपधा ॥ ८ अप्रयुज्यमानः सफल इत् ॥ ९ डः प्रत्ययादिः ॥ १० स्वरानन्तराणि व्यञ्जनानि संयुक्तम् ॥ ११ अधातुप्रत्ययोऽर्थवन्नाम ॥ १२ कृत्तद्धितौ च ॥ १३ उदन्मिदिणेह्य एदतोदिर्हितो स्साणम्मीसवः सुप् ॥ १४ क्रियायामश्वादयो धातवः ॥ १५ आयान्ताश्च ॥ १६ द्वौ द्वौ प्रथममध्यमोत्तमाः ॥ १७ एकवचनबहुवचने ॥ १८ सुपश्च ॥ १९ अव्ययम् ॥ २० अहादयः ॥ २१ अत्यादयश्च ॥ २२ अमादितद्धितान्ताः ॥ २३ हेतुमण्यन्तकृदन्ताश्च ॥ २४ समासेऽमन्ताः ॥ २५ इकारान्ता दिस्यादयः ॥ २६ करणप्रयोजकः कर्त्ता ॥ २७ क्रियया कर्त्तुरिष्टं कर्म ॥ २८ अभेदान्वयि च ॥ २९ कर्मयुगविवक्षितं चापादानादिभिः ॥ ३० व्यापारवत्करणम् ॥ ३१ कर्मान्वयेनेष्टं सम्प्रदानम् ॥ ३२ विभागेऽवधिरपादानम् ॥ ३३ आश्रयोऽधिकरणम् ॥ ३४ अनेकं नामैकार्थे समासः ॥ ३५ आदेदोतामदिदुतो ह्रस्वाः ॥ ३६ अदिदुतामादेदोतो वृद्धिः ॥ ३७ अदानाविदीतावुदूतौ सवर्णौ ॥ ३८ व्यञ्जनेषु प्रथमादि

तीययोस्तृतीयश्चतुर्थयोश्च प्रथमतृतीयौ ॥ ३९ समानयोर्विरोधे परम् ॥ ४० षष्ठ्या अन्त्यस्य ॥ ४१ विशेषणं तदन्तस्य ॥ ४२ अनेकवर्णशित्सर्वस्य ॥ ४३ टकितावाद्यन्तयोः ॥ ४४ एकस्मिन्नेकवचनम् ॥ ४५ तदन्यस्मिन् बहुवचनम् ॥ ४६ चतुर्थ्या न द्विवचनम् ॥

## द्वितीयः पादः ॥

१ बहुलम् ॥ २ स्वरयोरव्यवधाने प्रकृतिभावो लोपो वैकस्य ॥ ३ तद्भावे सन्धिः ॥ ४ एकः पूर्वपरयोः ॥ ५ समानयोः पूर्वस्य सवर्णः ॥ ६ वृद्धिरतः स्वरे परस्य ॥ ७ सवर्णे दीर्घः ॥ ८ वेरितोऽतेरन्तः ॥ ९ इदीदुदूतामसवर्णे पूर्वः ॥ १० तरहेभ्यश्च जझाः ॥ ११ उद्दुर्निर्वीनां संयुक्ते ॥ १२ संयुक्ते ह्रस्वः ॥ १३ पत्तादिषु नित्यम् ॥ १४ आदिदुद्भ्यः स्वरे सुपि पूर्वसवर्णः ॥ १५ पितृप्रभृतीनामोरुत्यात् ॥ १६ अत्यरोः ॥ १७ अरोमि ॥ १८ अतोऽस्त्रियां हिस्नोतः क्वचित् ॥ १९ स्सस्य वा ॥ २० अहे व्यञ्जनस्य परसवर्णः ॥ २१ त्रयाणामव्यवधाने पूर्वस्य लोपः ॥ २२ समश्च ॥ २३ अपूर्वस्य संयुक्तस्य ॥ २४ उपसर्गस्य दीर्घात् ॥ २५ निरः क्रमस्य ॥ २६ अभेर्द्धुमस्येज्जे ॥ २७ कमचिगतरपज्ञानां द्वितीयः ॥ २८ आतो ज्ञवस्य नित्यम् ॥ २९ नस्से दीर्घात् ॥ ३० न्तीज्ञयोः पविष्पाभ्याम् ॥ ३१ उतः पितृप्रभृतिभ्यो डडरमावामन्त्रणे ॥ ३२ ताराद्या डो लोपश्चारस्य ॥

## तृतीयः पादः ॥

१ खुड्डस्य के दीर्घः ॥ २ इः किरणाभुजंगयोः ॥ ३ चरमे रस्य ॥ ४ नगिणस्यादेः स्वरस्य ॥ ५ उर्मत्थलिंगस्य ॥

६ उपधायाः ॥ ७ अभिक्विखल्लादीनाम् ॥ ८ ओस्तंबूलस्य ॥ ९ पुरुषे द्वितीयस्योत इः ॥ १० वेंटालिसिंदयोरत् ॥ ११- दुकूलस्य द्विर्ह्रस्वश्च ॥ १२ आनभ्रूच्छादस्येते ॥ १३ हणस्य हस्य हुरिये ॥ १४ उदृतोरोदुतौ लस्य द्विः कुतूहले ॥ १५- थईत ऊदोतौ ॥ १६ विच्छिये चोऽनुस्वारः ॥ १७ उसियस्य ॥ १८ इश्विह्रीहिंनवां दुप्रभृतिभ्यः ॥ १९ पडेरेकेन समासे दीर्घः ॥ २० एर्यः कात्पूर्वः परो वा ॥ २१ खण्डादीनामुत्त- रपदे ॥ २२ जादयो व्यञ्जनान्ताः ॥ २३ कोरादोतौ ॥ २४- णित्यादिस्वरस्य वृद्धिः ॥ २५ एमाणयोर्दिसस्य प्रेक्षणे ॥ २६- खडि भुंजस्य ॥ २७ रुदस्यान्ततिन्तिहिमाणेषु ॥ २८ दो वः ॥ २९ णुकरादीनां त्यादौ ॥ ३० गिण्हस्य स्वार्थे ॥ ३१- मुंचस्य तिन्तिमिच्छिखणत्तुंतूणेषु ॥ ३२ आतो रुहस्य ति- स्ताकेषु ॥ ३३ आतस्तुडस्येज्जे ॥ ३४ णुल्लस्येते ॥ ३५ मे तरस्य ॥ ३६ च्छुभडुहभुंजसिंचानां डे ॥ ३७ आति चिगि- च्छस्य ॥ ३८ निरोऽभ्यवानूदराणाम् ॥ ३९ एत्पोरस्य कचे ॥ ४० पितुप्रभृतीनामिः ॥ ४१ सात्पकखस्य ॥ ४२ पुत्वस्य पौ ॥ ४३ जतद्व्यामनन्तरस्य ॥ ४४ ओर्जसादीनामुत्तरपदे ॥ ४५ चरेऽहेराः ॥ ४६ दियानिस्योरम्बोत्तरपदयोः ॥ ४७ आ- णात्पाणस्योत् ॥ ४८ ओदणादारस्य ॥ ४९ अवदग्गस्य वा ॥ ५० छवेरिये दीर्घः ॥ ५१ उउंबरस्योतो लोपः ॥ ५२ ईरु- द्धस्य मुहे ॥ ५३ अच्छेरः ॥ ५४ एकार्थकानां सपण्णाण- उइषु दीर्घः ॥ ५५ छाद्वयोश्च ॥ ५६ तेरेः ॥ ५७ चतोरतः पूर्वस्य ॥ ५८ चोः संख्यावाचके ॥ ५९ तरस्य के ॥ ६०- अत्पसिणस्येये ॥ ६१ मिगसिरस्यादेरति ॥ ६२ अदणोरु- तोच ॥ ६३ अजिनस्येमोऽणि ॥ ६४ पडिहार्यां आत एः ॥

६५ ममस्येदियियोः ॥ ६६ इति सद्धाया ह्रस्वः ॥ ६७ जुवाणस्यातो बस्य द्विर्वा ॥ ६८ एदहिपुरयोर्वचे ॥ ६९ कलुणस्यौत् ॥ ७० अङ्गादीनां मये ॥ ७१ दिसे पूर्वस्याति ॥ ७२ एदिमस्य ॥ ७३ ईच्च कस्य ॥ ७४ इदेतस्य ॥ ७५ इमास्साय क्खः ७६ समानाच्छः ॥ ७७ इमो लोपो वा त्तोहुणादिसेषु ॥ ७८ काद्देः ॥ ७९ आमोसादोसहे रोसस्य ॥ ८० तवि दुहो ह्रस्वः ॥ ८१ जहस्तिमाणणिज्जेषु ॥ ८२ उत्वस्य नोत्थहिंसु ॥ ८३ इणमादीनामेत्ते दीर्घः ॥ ८४ दलस्य हे ॥ ८५ मिलस्य ये ॥ ८६ पान्नयि वेः ॥ ८७ उतः सुस्सुसस्यान्त्यस्य ॥ ८८ उत्सिणस्य मौ ॥ ८९ एति दो ह्रस्वः ॥ ९० ह्रेमौः ॥ ९१ आत इत् ॥ ९२ पाद्यच्छः ॥ ९३ नेजमस्य तिन्तित्तासु ॥ ९४ पस्योणदेज्जागट्टिसवणासु ॥ ९५ सुत्ते वा ॥ ९६ एति समुदो धारस्य ॥ ९७ लोलस्य स्से ॥ ९८ ट्ठश्च ॥ ९९ अपेरेरेति धि ॥ १०० दो रुहस्योतो दीर्घः ॥

## चतुर्थः पादः ॥

१ दोह्रो धः ॥ २ मोऽनुस्वारोऽवसानव्यञ्जनयोः ॥ ३ स्वरे वा ॥ ४ तस्य सवर्गीयपञ्चमः स्पर्शेषु ॥ ५ उदः सम्ब्भः ॥ ६ झधभेभ्यस्तस्य धः ॥ ७ सात्थः ॥ ८ अस्सादिषु संयुक्तस्यादिपूर्वयोर्लोपदीर्घौ ॥ ९ एतः कारेह्लस्येयः ॥ १० अनादेरसंयुक्तस्य कोगयौ ॥ ११ धातूनां करणादीनाम् ॥ १२ वज्जादीनां वस्योस् ॥ १३ पज्जादीनां पो वः ॥ १४ धादीनां धभयोर्हः ॥ १५ मिलेच्छे च्छस्य क्खुः ॥ १६ एतोऽद्भुताविलयोर्लोपः ॥ १७ पज्जाये ज्जायस्य रियागः ॥ १८ मत्तिये तयोष्टौ ॥ १९ तत्थस्य तहः ॥ २० गचजतदां यः ॥ २१ बुधादीनां

धस्य हः ॥ २२ नो णः सर्वत्र ॥ २३ परिहे परयोः फलौ ॥ २४ आतपादीनां पस्य वः ॥ २५ पिपीलिकाया अनादेः ॥ २६ पुडपुरयोरुत्तरपदयोरादेः ॥ २७ पउमस्य पोम्मः ॥ २८ यजोजः ॥ २९ रिओरुउः ॥ ३० जुहिट्ठिले च ॥ ३१ आविले वस्य ॥ ३२ जुवललावण्णयोर्वस्य ॥ ३३ उर्वसभस्य सातः ॥ ३४ परिवारे वरयोर्यलौ ॥ ३५ दिवसे वसयोर्यहौ ॥ ३६ उसिणपसिणयोः सिणस्य ण्हः ॥ ३७ असिलेसे सस्य छिरश्चेतः ॥ ३८ इलोर्लोपश्च ॥ ३९ महरट्ठे हरयोर्व्यत्ययः ॥ ४० सणियमच्छरस्य च्छरो यमो लोपः ॥ ४१ यस्य चरे ॥ ४२ दकस्य दः ॥ ४३ सहसमानयोः सः ४४ णखपदस्य णप्फयः सात् ॥ ४५ अहस्याण्हः ॥ ४६ तिपदे दस्य तलोपौ ॥ ४७ खंधादावारस्यावस्य लोपः ॥ ४८ पायवस्योवगमणे यस्य वस्य यवयोश्च ॥ ४९ अधोरवधेर्वस्य ॥ ५० आगंतारस्यागार आरस्य ॥ ५१ इयोरगन्तारः ॥ ५२ इज्जाया एसस्येसः ॥ ५३ विहवणाभ्यां पनेः फसौ ॥ ५४ उत्तेयस्य ॥ ५५ पायस्य मूले यस्य ॥ ५६ दिवड्ढाड्ढाइज्जाद्धुट्ठाः मार्द्धकद्वयत्रयेषु ॥ ५७ असौ पस्य फः ॥ ५८ इगे गस्य ॥ ५९ चत्तालीसस्य यालतालीसौ ॥ ६० दोर्वेबौ ॥ ६१ बा संख्यार्थके ॥ ६२ दुवादसे ॥ ६३ सट्ठेर्वः ॥ ६४ पणाल्लोपः ॥ ६५ सत्तरेर्हश्च ॥ ६६ चतुरचुलावसीतौ ॥ ६७ छस्य सोर्दसे ॥ ६८ सत्तस्य चीसादौ ॥ ६९ सीर्याले ॥ ७० दसस्य रलौ ॥ ७१ अट्ठात्सस्य ॥ ७२ अट्ठे ट्ठस्य डो यालयालीसयोः ॥ ७३ एकस्योणे अउणः समुदितस्य ॥ ७४ थेरधीरपियानामिज्जे थधपाः ॥ ७५ इये णायस्य णेया ॥ ७६ उदियस्य वा ॥ ७७ असिसण्णाईणस्यासणि ॥ ७८ इये सिलेसस्य सेसः ॥ ७९ अति पच्छिम

स्य पच्चच्छिमपच्चत्थिमौ ॥ ८० रात्तेरुत्तरपदस्यात् ॥ ८१ आन्मन्तस्य वः ॥ ८२ जसादिभ्यो वा ॥ ८३ णातेश्च ॥ ८४-वस्मस्य वुसिमन्ते ॥ ८५ पङ्कादीनां संज्ञायां दीर्घः ॥ ८६-थेरधीरसहायानामेरे रायानामेज्जः ॥ ८७ सफले फस्य हः ॥ ८८ सुकुमारस्य सुगमलः ॥ ८९ इंगालादिभ्यो भवस्यादेर्ढिः ॥ ९० दिसस्य रलावति ॥ ९१ ईत्तादितः ॥ ९२ तियस्य वा ॥ ९३ दोर्यिडीयतियतीयेषु ॥ ९४ तेरभ्त्वणि च ॥ ९५ सब्वस्य सो दे ॥ ९६ जाणम्यादेर्यः ॥ ९७ आतो दहस्य डः ॥ ९८ सदस्यास्वादे दयोस्तौ यः ॥ ९९ आतो दीवस्य दो लः कणतेतेषु ॥ १०० पादिज्जे ॥ १०१ वस्य यो वा ॥ १०२ नेः कसस्यादेर्घः ॥ १०३ खेतस्य च्छः ॥ १०४ गिम्हस्य घिंसुः १०५ णिचे चयोस्तियः ॥ १०६ गिहस्य गहघरहराः ॥ १०७ भेसजस्य हः ॥ १०८ परिवाड्यो डः ॥ १०९-अहेरत्तस्य ठथौ ॥ ११० बीभत्थस्य च्छश्च ॥ १११ डरयोर्लो लस्य रः ॥ ११२ अलाबुरिव्वोर्लोपः ॥ ११३ लुक्खादीनां हः ॥ ११४ आसो स्टस्य तः ॥ ११५ मणादावस्य मः ॥ ११६ पणस्य ढिः ॥ ११७ मडस्येल्ले ॥ ११८ उपमादीनामणि ढिः ॥ ११९ पयडेर्यः ॥ १२० दूयादीनां चः ॥ १२१-तीयस्य ज्जः ॥ १२२ णिहमि यः ॥ १२३ एति दिसस्य हः ॥ १२४ माणे वा ॥ १२५ विप्पाभ्यां नमस्य वो न्तौ ॥ १२६-उपसर्गात्पडस्य यः ॥ १२७ लुणस्येज्जे यः ॥ १२८ वहस्येहो भो ढिश्च ॥ १२९ कर्मणि चाति ॥ १३० न्ते वा ॥ १३१-विंघस्य तिन्त्योः ॥ १३२ व्वयस्य चस्त्यादौ ॥ १३३ सुयस्य वस्तितयोः ॥ १३४ अभे रंजस्य गः ॥ १३५ अदितयोरिवैकादेशो ॥ १३६ किलामस्य वो न्तिकर्मणोः ॥ १३७ चयस्य को

ये ॥ १३८ जोयस्य वः ॥ १३९ उभामस्य तौ वा लोपः ॥ १४० धुक्खस्य कः ॥ १४१ लोलस्येज्जे ढः ॥ १४२ समच्छिद्दस्य न्त्रः १४३ धोवस्य यः ॥ १४४ आतो रुहस्य भस्तौ ॥ १४५ ओतरित्त च ॥

॥ इति प्रथमोऽध्यायः ॥ १ ॥

## द्वितीयोऽध्यायः ।

### प्रथमः पादः ॥

१ नाम्नः सुपः ॥ २ इदुतः पुंस्यतः ॥ ३ आमन्त्रणोतो लोपः क्लीबे नित्यं पुंसि वा लोपोऽतो वा दीर्घः ॥ ४ युभ्यां च ॥ ५ अतोऽत्यन्यस्य ॥ ६ न्तमन्तयोरीदुतोर्नस्य ॥ ७ लोपेऽनुस्वार उतः ॥ ८ रायादिभ्य आत् ॥ ९ मोऽणङ् वा ॥ १० अदितोरणोः ॥ ११ राये सेणस्य यस्य न्ना ॥ १२ सस्सस्य न्नो ॥ १३ न्तमन्ताभ्यामुः ॥ १४ इणस्सयोर्डास् डोसौ नलोपश्च ॥ १५ सेदणमो भवन्तस्स भे ॥ १६ तारादोः ॥ १७ तारस्य त्तुस्तृतीयादौ वा ॥ १८ रायस्याणमिश्चोरियस्य ॥ १९ इदुद्भ्यामिणस्य णा ॥ २० अत्ताप्पाभ्यां च ॥ २१ स्सस्य णोः ॥ २२ जसादिभ्यः मोः ॥ २३ सुङ् चेणस्य ॥ २४ कम्मधम्मयोरुरिणे ॥ २५ अदितोर्णो वा ॥ २६ अएतः स्सणावात्र-स्त्रियाम् ॥ २७ अतोत्स्सयोर्णोत् ॥ २८ क्वचिदात्स्सः ॥ २९ अतोऽस्वो डुतः ॥ ३० बह्वोरवेरतः ॥ ३१ णस्य स्त्रियामेः ॥ ३२ आतश्चादितोरोङ् ॥ ३३ आदीदूतां ह्रस्वो मि ॥ ३४ स्सस्याएः ॥ ३५ मेरादीदूद्भ्यः ॥ ३६ आतो डेरीदूद्भ्यां ङिङ् वाऽऽमन्त्रणे ॥ ३७ सव्वादयः सव्वणामाः ॥ ३८ सव्वणामाकर्ये ॥ ३९ अनुस्वारस्येस्सिमः ॥ ४० इस्सिमणामः ॥ ४१ कजतेभ्यो-

